SRI PARIMALA
Publications No. 5.

PHILOSOPHY
Series No. 5.

# BHEDA-VIDYA-VILASA

OF

*JAGADGURU*

SRI VIJAYINDRA TIRTHA SRIPADA

WITH AN INTRODUCTION BY

Dr. R. NAGARAJASARMA, M.A., L.T., Ph.D.
UNIVERSITY OF MADRAS

AND SYNOPSIS BY

B. N. KRISHNAMURTY SARMA, M.A.
PRINCIPAL OF
RAJA'S COLLEGE, TIRUVADI

EDITED BY

'*KAVITILAKA*', '*SAHITYALANKARA*'
RAJA S. GURURAJACHARYA

*Published by*

SRI PARIMALA PUBLISHING HOUSE,
NANJANGUD.
1945

Postage Extra ] [ PRICE 2—8—0

# REFEREES

*Vidwadbhushanam*
*Asthana Vidwan*
**Durgam Bhimacharya,**
Nanjangud.

*'Pandita Ratnam'*
*Maha Vidwan*
**Nerur Krishnacharya,**
Mysore.

*'Vidwanmani'*
*Maha Vidwan*
**Prof. D. Vasudevacharya,**
Mysore.

*'Nyaya Bhushanam'*
*Maha Vidwan*
**Prof. D. Krishnamurtyacharya,**
Mysore.

*'Vidya Bhushanam'*
*Nyaya Vidwan Nyaya Siromani*
*Astana Vidwan*
**Acharya Venkobacharya,**
Mantralaya.

*'Nyaya Visarada'*
**Prof. N. Vijayindracharya,**
Tiruvadi.

**Dr. R. Nagarajasarma,** M.A.L.T. Ph.D.
Madras.

*'Vedanta Vichakshana'*
**Katte Gururajacharya,**
Kopbal.

**R. S. Panchamukhi,** M. A.
Director of
Kannada Research, Dharwar.



श्री परिमळग्रन्थ
प्रकाशनमालाङ्कः ५

वेदान्त विभागाङ्कः ५.

जगद्गुरु

श्रीमद्विजयीन्द्रतीर्थ श्रीपादविरचितः

# भेदविद्याविलासः

मद्रपुरीय विश्वविद्यालयाध्यापकैः
डाक्टर आर. नागराजशर्मभिः, एम.ए. एल.टि., पि.एच.डि.
महोदयैः विरचिताङ्ग्ल भूमिकालङ्कृतः

पञ्चनदस्थकलाशालाध्यक्षैः
वि. एन. कृष्णमूर्तिशर्मभिः, एम. ए.
महाशयैः विरचिताङ्ग्लभावार्थ विभूषितः

कवितिलकसाहित्यालंकारबिरुदभाग्भिः
राजा श्री गुरुराजाचार्यैः
संस्कृतश्च

श्री परिमळ ग्रन्थप्रकाशन मन्दिरम्
नञ्जनगूडु

(प्रापणव्ययः प्रथक्)

मूल्यम २।।

## जगद्गुरु श्रीमदानन्दतीर्थभगवत्पादाः



सन्मार्गैक समुल्लसन्निज गतिस्सर्वज्ञ चूडामणिः ।
संयोज्याप्यखिलाः कला बुध कुलं संप्रीणयन् सर्वदा ॥
सुव्यक्त द्विजराज भावमहित स्स्वीयः प्रसादस्समे ।
श्रीमन्मध्वमुनीन्दु रान्तर तमः स्तोमं समुत्सादयेत् ॥

THE BANGALORE PRESS

श्रीमज्जगद्गुरु सर्वतन्त्रस्वतन्त्र

श्रीमद्विजयीन्द्रतीर्थ पूज्यचरणानां बृन्दावनम्

कुम्भकोणक्षेत्रम्



भक्तानां मानसाम्भोज भानवे कामधेनवे ।

नमतां कल्पतरवे जयीन्द्र गुरवे नमः ॥

॥ श्री ॥

# भेदविद्याविलासः

श्रीमत्परमहंस परिव्राजकाचार्यवर्य पदवाक्यप्रमाण पारावार
पारङ्गत सर्वतन्त्रस्वतन्त्र यमनियमासन प्राणायाम प्रत्याहार
ध्यान धारणाद्यष्टाङ्ग योगानुष्ठानगरिष्ठ श्रीमद्वैष्णव-
सिध्दन्त प्रतिष्ठापनाचार्य श्रीमन्मूलरघुपतिदेव
दिव्यश्रीपाद पद्माराधक जगद्गुरु श्रीमन्
मध्वाचार्य मुख्यमहासंस्थानाधीश्वर
षड्दर्शनाचार्यवर्य निखिल विद्या
चक्रवर्ति चतुःषष्ठिकला-
पारङ्गत चतुरधिकशत
प्रबन्ध प्रवर
प्रकाशन
प्रवीण
श्रीमत्कर्णाटक
साम्राज्याधीश अळिय
रामराजसार्वभौम समनुष्ठित
रत्नाभिषेकाद्यनेक सेवादिभिर्दिगन्त
विश्रान्त विमलकीर्तिचन्द्रिकाराराज्यमानपाद-
पङ्कज नास्तिककुलतिमिर निराकरण सहस्रकिरणा-
स्तिकमार्ग प्रदर्शनमहाचार्य श्रीमदानन्दतीर्थ भगवत्पाद
परंपराप्राप्त द्वैतवेदान्त साम्राज्यदिग्विजयविद्या
सिंहासनाधीश्वर निराकृताद्वैतशैवाप्पय्य
दीक्षितेन्द्राद्यखिलदुर्वादिमत्तेभ पञ्चानन
सकलयतिकुलतिलक श्रीमत्सुरेन्द्र
तीर्थ श्रीपादान्ते वसदग्रणि
जगद्गुरु श्रीमद्विजयीन्द्र
तीर्थ यतिसार्वभौम
शिखामणिभिः
विरचितः



सकलसद्गुणसमलङ्कृत

जगद्विख्यात महामहिम

स्वाश्रित सकलभक्ताभीष्ट प्रदान विजित कामधेनु

कलियुग कल्पतरु

तुङ्गातरङ्ग संपावित श्रीमन्मन्त्रालय क्षेत्र

सुविलसत्सुन्दर बृन्दावन

मन्दिर विहार

जगद्गुरु

यतिसार्वभौम

## श्रीमद्राघवेंद्रयतीन्द्र

चरणनळिनेऽर्पितोऽयंग्रन्थः

राजतेतराम्

॥ श्रीमन्मूलरामोविजयते ॥

# जगद्गुरु श्रीराघवेन्द्रगुरुसार्वभौमाः ।



दुर्वादिध्वान्तरवये वैष्णवेन्दीवरेन्दवे ।
श्रीराघवेन्द्रगुरवे नमः कारुण्यसिन्धवे ॥

The Bangalore Press

## जगद्गुरु श्रीमत्सुयमीन्द्रतीर्थपूज्यचरणाः

[श्रीपरिमळग्रन्थप्रकाशनमन्दिरस्य महाराजपोषकाः]



शास्त्राटवी सञ्चलनप्रमोदी दुर्वादिमत्तेभविदारणक्षमः ।
वेदान्तसत्पीठगुहाप्रविष्टो राजत्ययं श्रीसुयमीन्द्रकेसरी ॥

श्रीमुख संख्या (नम्बरु) ९०/६-६-१९४४.

| मोहरु | श्रीरामचन्द्रः (श्रीपादानां हस्ताङ्कनम्)



स्वस्तिश्रीविजायाभ्युदय शालिवाहनशक १८६७ तमे तारण नामसंवत्सरस्य आषाढशुक्ल पूर्णिमा गुरुवासरे श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाण पारावारपारङ्गत सर्वतन्त्रस्वतन्त्र श्रीमद्वैष्णवसिद्धान्त प्रतिष्ठापनाचार्य श्रीमन्मूलरघुपतिवेदव्यासदेव दिव्यश्रीपादपद्माराधक जगद्गुरु श्रीमन्मध्वाचार्य मुख्यसंस्थानाधीश षड्दर्शनाचार्य निखिलविद्याचक्रवर्ति श्रीमद्राघवेन्द्र गुरुसार्वभौममठीय दिग्विजयविद्यासिंहासनाधीश्वर श्रीमत्सुशीलेन्द्रतीर्थपूज्यचरणकमल सञ्जात श्रीमत्सुव्रतीन्द्रतीर्थश्रीपादवकुमारकश्रीमत्सुयमीन्द्रतीर्थश्रीपादैः—

अस्मत्प्रियशिष्येभ्यः श्रीमत्परिपळग्रन्थप्रकाशनमन्दिराधिकारिभ्यः, कृता नारायणस्मृतिः, वयंगुरुदेवतानुग्रहेण स्नानजपदेवपूजापाठप्रवचनाद्यनुष्ठानेन युष्माकं श्रेयोभिवृध्यै श्रीमूलरघुपतिवेदव्यासप्रार्थनां कुर्वन्तः श्रीमन्त्रालयक्षेत्रमधिवसामः युष्माकं कुशलवार्तादिकं लेखनीयम् ॥

तदनु, इहखलुसंसारकान्तार भ्रमणसमादितनैकदुःखानलसन्दूयमान मानसानां यस्मिन्कस्मिन्नपि दुःखसाधने सुख-साधनत्वभ्रान्त्या प्रवर्तमानानामत एव दुःखमहोदधौ निपतितानां तन्निवृत्युपायमविजानतामुद्दधीर्षया प्रवृत्ता मातापितृबन्धुजनेभ्योऽधिकतरवात्सल्यवती भगवतीश्रुतिः दुःखनिवृत्तिपूर्वक निजानन्दाविर्भावनिदानं निरूपयति ॥ कालबलतः निगमार्थनिर्णयविधुराणां सतांहितैषिभिः पद्मासनादिवृन्दारकगणैरभ्यर्थितो भगवान्पद्मालयाजानिर्बादरायणरूपेणावतीर्य निगमार्थनिर्णायकानि ब्रह्मसूत्राणि चकार ॥

कालेकलौ दुर्भाग्यसन्तमससन्ततितान्धीभूतान् सज्जनान्वि-लोक्य कृपालुभिश्चतुर्मुखमुखैरमरगणैः प्रार्थितो वासुदेव स्त्रियुगह्व-तिस्स्वकार्यवीर्यं सर्वज्ञमन्यमनवेक्ष्य सर्वप्राणिगणनायकमज्ञानादिदो-षविधुरं विश्वज्ञं मातरिश्वानमादिशत् वळित्थादि निगमगेगीयमान-महिमा विश्वजनीनवृत्तिर्भगवान्पावनः पवनः विज्ञात भारतपुराण सकलशास्त्रात् अत एव भट्टपदभाजः मध्यगेहभूसुरवराद्वेदवत्यां प्रादु-र्बभूव वासुदेव नाम्ना । तत अच्युतप्रेक्षयतिपुङ्गवतो गृहीततुरीयाश्रमः पूर्णप्रज्ञाभिधः सूत्रकृदनुज्ञाया तदाशयावेदकमेकविंशतिकुभाष्यदूषकं वासुदेवपरतत्वजगत्सत्यत्वप्रमुख प्रमेय प्रतिपादकं भूतभाविभवदात्म-भिरप्यदूष्यं सूत्रभाष्यादि ग्रन्थशिरोरत्नसञ्चयमाकार्षीत् ॥

तदनन्तरं तदर्थावगतिसामर्थ्यविधुराणि सज्जन कुमुदवृन्दा-न्यनुजिघृक्षुर्जयतीर्थाभिधयाऽवतीर्णोऽमराधिप स्स्फुटतरं भाष्यादिनि-खिलप्रबन्धान्व्याचष्ट । तत एतद्वैतराद्धान्ते क्षुद्रमतिभिरारोपितान् दोषाभासान्परिजिहीर्षुः, तत्र तावत्प्रथमेऽसुरान्वय सम्भूतोप्यासुरभा-वविहीनः निजतत्त्वोपदेशेनोद्धृतानिखिलदैतेयपोतः प्रत्यक्षीकृत सक-ललोकाश्चर्यतमनृसिंहरूपीपुरुषोत्तमः सकलजनाह्लादकरीप्रह्लादनामा देववरो व्यासतीर्थाभिधयाऽवतीर्य चन्द्रिकादि प्रबन्धप्रवरान्प्रणि-नीय "प्रतिसूत्रं प्रकाश्येते घटनाघटनेमया । स्वीयान्यपक्षयोस्स-म्यग्विदांकुर्वन्तु सूरय " इत्यादि प्रतिज्ञानपुरस्सरं दुर्वारामितयुक्तिनि-करैः परपक्षखण्डनेन स्वीयसिद्धान्तं स्थापयामास । एतेषामन्तेवासिषु प्रथमतया परिगणिताश्चिरंगृहीताशनव्रतसमनुष्ठितनिखिलभूप्रदक्षिण पावितास्खिलजनसञ्चयानां प्रध्वंसितदुर्मतध्वान्तानां सन्दीपितद्वैत-सिद्धान्तज्योतिषां श्रीमत्सुरेन्द्रतीर्थ पूज्यपादनां करसरसीरुहसमु-द्भवाः चतुःषष्ठिकलाकोविदाः निराकृताद्वैतशैवाः निजपाण्डित्य-पराभूतशैवबुधस्वायत्तीकृतविद्यासिंहासनराराज्यमनपदपङ्कजाः श्रीमद्वि-

जयीन्द्रपूज्यचरणाः ॥ इमे युक्तिरत्नाकर साहित्यसाम्राज्य सुभद्रापरिणयनाटकालङ्कारमञ्जर्यादि कृति निर्मातॄणां नैकवारं कर्णाटकाधिपतिभिस्तथा रघुनाथभूपालकारितरत्नाभिषेकानां चतुःषष्ठिकलापरिपूर्णानां श्रीमत्सुधीन्द्रतीर्थव्रतिवराणां विद्यात आश्रमतश्च गुरवः । वेदत्रयव्याख्या परिमल भावदीप गीतार्थसंग्रह भाट्टसंग्रहप्रमुख प्रबन्ध प्रणेतॄणां नास्तिकमयेऽप्यस्मिन्काले ईप्सितफलवितरणेनोद्धृत सकलसज्जनस्तोमानां कामिताशेषकल्याणकल्पनाकलुषितकल्पपादपकामधेनूनां निजबृन्दावन सन्दर्शनजनितामोघानन्दतुन्दिलभक्तजनवृन्दानामत एव स्फुटतरं संवेद्यमान प्रह्लादावताराणां जगद्गुरु श्रीमद्राघवेन्द्रगुरुसार्वभौमाणां विद्यात आश्रमतश्च परमगुरवः ॥

एतैश्चतुराधिकशताधिकाः प्रबन्धप्रवराः पदवाक्यप्रमाणव्यासीयशास्त्रेषु निरमायिषत । तेषामयं नृसिंहाश्रममुनिप्रणीत 'भेदधिक्कार'स्य खण्डनरूपः 'भेदविद्याविलासा' भिधः ग्रन्थप्रवरः । अत्र सव्याख्याभेदधिक्कारवाक्यान्यनूद्य सम्यग्दूषितानि अस्मिन्प्रबन्धे चत्वारि प्रकरणानि विद्यन्ते । तत्र प्रथमे—मनसः प्रमाणान्तरसहकारिणः प्रामाण्यासम्भवेन भेदेन सन्निकर्षासम्भवाच्च । जीवेश्वरभेदे मानसं, ईश्वरत्वस्य दुर्वचत्वेन योग्यानुपलब्धिनिर्वचनासम्भवेन च नाहमीश्वर इति प्रत्यक्षं च न प्रमाणं प्रतीयमानोपि भेदः, औपाधिको न निरुपाधिक इत्यादि विषयजातमनूद्य मनसः प्रामाण्यस्य भेदेन सन्निकर्षस्य च साधनेन मानसस्य योग्यानुपलब्ध्यादि निर्वचनेन नाहमीश्वर इति प्रत्यक्षस्य भेदे प्रामाण्यं भेदस्य निरुपाधिकत्वं च समर्थितम् ॥

द्वितीये, सिद्धसाधनत्वव्याप्यत्वासिध्यप्रयोजकत्वादि दोषकलङ्कितस्यानुमानस्य न भेदे प्रामाण्यमित्यंशं व्यावहारिकभेदमादाय सिद्धसाधनत्वेऽतिप्रसक्तिर्बाधादेरुच्छेदापत्तिश्चेत्यादिना निराकृत्यजीवेश्वरभेदस्यानुमानिकत्वं व्यवस्थापितम् ॥

तृतीये, भेदस्य प्रमाणान्तरगम्यत्वेन तज्ज्ञानस्य पुमर्थ साध-नत्वाभावेन प्रत्युतानर्थहेतुत्वावगमनेन च न भेदेश्रुतितात्पर्यमिति भेदेऽऽगमो न प्रमाणमित्यादीन्यनूद्य निरुपाधिकात्मभेदस्य प्रत्यक्षा-प्राप्ततया तत्र श्रुतेस्तात्पर्यं सम्भवति 'पृथुगात्मानं प्रेरितारञ्चमत्वा,' 'योमामेवमसंमूढः' इत्यादि श्रुतिस्मृत्या भेदज्ञानस्य पुमर्थसाधन-त्वावगमेन 'उदरमन्तरं कुरुत' इत्यादेरर्थान्तरपरत्वस्यैव न्याय्यत्वा-त्प्रत्युताभेदज्ञानस्यैवा नर्थहेतुत्वावगते रित्यादिना दूषयित्वा निगमवे-द्यत्वं भेदस्य निरूपितम् ॥

चतुर्थे, भेदः, विभागः पृथुक्तं वा वैलक्षण्यं वा अन्योन्याभावो वा वस्तुस्वरूपं वेत्यादिना भेदस्वरूपं यन्निराकृतं तदनुवादेन भेदानङ्गी-कारे सुरापयसोः मातृकलत्रयोः, अन्नानन्नयोर्भेदाभावेनबहुविप्लव-स्स्यात् भेदप्रतीतिनिवृत्त्यै श्रवणादौ प्रवृत्तिर्नस्यादित्यादियुक्त्या तन्नि-राकृत्य 'अन्यावाचोविमुञ्चथ' 'नान्यःपन्थाः,' 'इतरेणतु जीवन्ति' 'उत्तमःपुरुषस्त्वन्यः' 'चार्थेद्वन्द्वः' इत्यादि प्रमाणेन भेदं प्रसाध्य तस्य धर्मि स्वरूपं व्यवस्थापितम् ॥

अधुना द्वैतसिद्धान्त प्रबन्धाः विशेषतः श्रीविजयीन्द्रतीर्थकृताः प्रायेण न मुद्रिताः तत स्तद्ग्रन्थानां प्रकाशनाय श्रीपरिमळ प्रकाशनाल-याभिधं प्रकटनमन्दिरं व्यवस्थाप्य ग्रन्थप्रकाशनाय उद्यतानां भवतां ग्रन्थमुद्रणे सहायोऽनुष्ठेय इति प्रार्थनानुसारेण यौष्माकीनकार्याभि-वृद्धौ यथा श्रीगुरुराजप्रेरणं सहायमनुतिष्ठामः । एतद्ग्रन्थप्रकाशनेन सुप्रीतः श्रीगुराजोपास्य चरणनलिनः श्रीभारतीशान्तर्गत श्रीमूलजा-नकीजानि र्भवतां इतोप्यधिक ग्रन्थप्रकाशन सामर्थ्यवितरणेन आयु-रारोग्यादिकं ददात्विति श्रीमूलरघुपतिवेदव्यासमभ्यर्थयामहे । फलग-न्धप्रसादमन्त्राक्षतादिकं प्रेषितं तत्स्वीकरणीयम् । शिष्टस्थितिः पत्राने-तृपुरुषमुखेन विदिताभवति इति नारायणस्मृतिः ॥

मोहरु

॥ श्रीः ॥

" विद्यात्मनिर्मिदावोधः "

श्रीमदानन्दतीर्थीय सच्छास्त्रामृतवर्षकः ।
श्रीमत्परिळो नाम भाति प्रकटनालयः ॥

# उपोद्घातः



ये नित्यं पदवाक्यमानसरणी संशीलनालङ्कृता—
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
याचानेक विनेय षट्पदतते स्सम्फुल्लमल्लीसमा
सैषा वाग्विजयीन्द्रसंयमिमणे र्ज्ञानार्थिभि स्सेव्यताम् ॥ १ ॥

स्तौमि श्रीविजयीन्द्रदेशिकमणे प्रौढिं तवाढौकित-
प्रज्ञागन्धवह प्रभञ्जनभरोदञ्चैकभास्वत्तुराम् ।
यातिस्फूर्तिमिहव्रजत्यभिदधत्यानन्दमाच्छादय-
त्याशाचक्रमहो विभाति रुचिराकारा च्चिरं द्योतते ॥ २ ॥

सर्वासामप्यनवद्यानां विद्यानां जन्मभूमिरियं भारतभूमिरियं-विवादम् । तदत्र बहुतिथात्कालात्प्रागेव सर्वगुणसम्पन्नो भगवान् वेदव्यासः वेदार्थनिर्णायकानि ब्रह्मसूत्राणि चकार । तानि चानेकै र्भाष्यकारै र्व्याख्यातानि । मन्दधिषणानां केषांचित् विपरीतार्थप्रतिपादकैरपि भाष्यै स्साधव स्संशयग्रहग्रस्तान्तरङ्गाः दुस्तरे मोहसागरे न्यमज्जन् । तदानीं भगवदादिष्टो भगवान् पवमानः श्रीमदानन्दतीर्थाभिधया ऽवतीर्य, एकविंशति कुभाष्याणि निरस्य स्वभाष्येण सत्तत्वसारं प्रतिपाद्य साधुजनानरीरक्षदिति विश्वविदितोऽयं विषयः । तद-

नन्तरं श्रीमन्मध्वप्रवर्तितमध्वरत्नमनुसरन्तस्सन्तो बहवोऽभिज्ञवरेण्याः श्रीमट्टीकाकृत्प्रमुखलेखाधिपाः मूलग्रन्थानां टीकाटिप्पण्यादिकं विरचय्य द्वैतसिद्धान्तस्य प्रचारमाकलयन्तः कलावपि सकलान् जनान् सकलानेव समकर्षुरिति च निश्चप्रचम् ॥

ततो गच्छति काले, सर्वज्ञतीर्थसच्छिष्यपरम्पराप्राप्त तुरीयाश्रमाः सकलकलाभिज्ञाः व्यासराजाभिधाः यतीश्वराः नकेवलं वेदान्तसाम्राज्याधिपत्यं, अपितु विजयनगर संस्थानाधिपत्यमपि निर्वहन्तो व्यराजन्त [1] । कदाचि न्महामहिमशालिनः श्रीमन्मध्वचार्याणां महासंस्थानाधिपतयः मानसपूजाधुरन्धराः श्रीमन्मूलरामार्चनोपार्जित विशिष्टवैभवाः श्रीमत्सुरेन्द्रतीर्थपूज्यचरणाः स्वसुहृन्मणीनिमान् व्यासराजयतीन्द्रान् सन्द्रष्टुकामा विजयनगरमभ्यागच्छन् । तदानीं श्रीमच्चन्द्रिकाचार्याणां बहुष्वन्तेवासिषु प्रचुरप्रभावशालिनं वर्चोविशेषविभूषितवपुषं तस्मादेव गुरोर्लब्धतुरीयाश्रमं विष्णुतीर्थ नामानां विष्णुभक्तप्रवर्हं च सन्ददृशुः । एतेषां सुरेन्द्रतीर्थानां विषये भूयः प्रदर्शितस्नेहातिशया व्यासराजयतीन्द्राः स्ववयस्यानमूल्येन केनचित्पारितोषकेन सन्तोषयितुमभिलषन्त स्तदर्थमेव परिपालितं स्वप्रीतिपात्रममुं विष्णुतीर्थं तेषां करे समर्प्यामन्दमानन्दमविन्दन् [2] । स्वीकृत्यच विष्णुतीर्थं सुरेन्द्रतीर्थश्रीपादास्तं "विजयीन्द्रतीर्थ" इति नवेन नामधेयेन विभूष्य स्वकरार्च्यमानाः श्रीमन्मूलरामादिप्रतिमा अप्रतिम

---

[1] See introduction of Mr. B. Venkoba Rao, B.A., M.C.S. in the "Life of Sri Vyasaraja" written by Somanathakavi.

[2] विष्णुतीर्थं करं गृह्य सुरेन्द्रस्य करे ददौ । ददामि मत्सुतं तुभ्यं स्वीकुरुष्व यतिव्रत ॥ परिपालय त्वं हंस त्वदर्थं स्थापितो मया । शिष्येष्वेतेषु सर्वेषु नानेन सदृशो मम ॥ इत्युक्त्वा प्रददौ व्यासः सुरेन्द्राय सुतं मुदा ॥ "विजयीन्द्रविजयः" (श्रीवादिराजयतिवरशिष्य श्रीमध्वकविविरचितः) ॥

महामन्त्रांश्चास्मै अनुगृह्य तं निजे वेदान्तसाम्राज्य महापीटेऽभ्यषिञ्चन् । एष एव यतीन्द्रो विजयीन्द्रतीर्थ इति प्रथितनामाऽस्माकमेतद्वचोविचारगोचरो कथानायकः[1] ॥

अमीषां श्रीमद्विजयीन्द्रतीर्थ श्रीपादानां कालः षोडशशताब्द्या आरम्भादासमाप्तीति (C. 1514-1595) आधुनिकानां बहूनां ऐतिहासिक विमर्शकानां विवाद विवर्जितो निर्णयः । एतान् १५६९ तमे वत्सरे सुरेन्द्रतीर्थाः स्वपीठे वेदान्तसाम्राज्योपरञ्जितेऽभ्यषिञ्चन् । तावत्पर्यन्तं श्रीव्यासराजतीर्थानां निकट एव कृतवसतयः इमे समग्राणि शास्त्राणि चतुष्षष्टिकलाश्च साकल्येन सञ्जगृहुः[2] इमे च निजायुषः भूयांसं भागं निरवद्य विद्यैक सञ्जायमाने कुम्भकोणाभिधाने नगरवर एवानैषिषुः । तत्र च स्वीयविद्यावैभवेन सर्वानपि ब्राह्मणान् पण्डितप्रकाण्डान् विजित्य तान् सर्वान् शैवान्कुर्वन्तं शैवगुरुं (शैव-

---

[1] गृहीत्वा तं मुनिं हंसो विष्णुतीर्थं सुरेन्द्रकः ।
सुरेन्द्रस्तस्य प्रददौ भिक्षो दण्डकमण्डलुम् ॥ १ ॥
दत्वा श्रीमूलरामार्चां विद्याराज्येऽभिषिच्य तम् ।
मन्त्रं दत्वा स्ववंशस्य कर्तारं कृतवान् मुनिः ॥ २ ॥
अथासौ विष्णुतीर्थश्च विजयीन्द्रेति विश्रुतः ।
"विजयीन्द्रविजयः" ॥

[2] षड्वारं व्यासराजेन्दु मुखाच्छ्रुत्वा विशेषतः ।
मध्वशास्त्रार्थं सारन्तु व्याचक्षाणं निजान्प्रति ॥ ३ ॥
नवकृत्वोन्यायसुधां व्यासतीर्थपयोनिधेः ।
उध्दृत्य पीतवन्तं च नाकीन्द्रमिव सन्ततम् ॥ ४ ॥
"सेतुमाधवविरचित विजयीन्द्रस्तोत्रम्" ॥
(स्तोत्रमहोदधिः पु. २९२)

मठाधिपं) एकादशदिनपर्यन्तं वादवैखरीभरेण पराजित्य तत्स्वायत्ती-कृत सर्वस्वाः व्यराजन्त । तदद्यापि विद्योतते[1] ॥

विजयाभिवृद्धिदत्तचित्तैरमीभिः तदा तदा विजयनगरादि विविध नगरीषु दिग्विजययात्राऽकारि । तत्रत्याः विपश्चिदपश्चिमा मायावादिनो निश्शेषं पराजीयन्त[2] । ततश्च, तत्रत्यैः तदानीन्तनैरव-

---

[1] (क) सकोणनिलये ग्रावग्रीवं शैवं जिगायच ।
तन्मठे ग्रावनिचये वासं तत्र चकार सः ॥
"विजयीन्द्रविजयः."

(ख) हेरासाख्य आङ्लग्रन्थकारस्य "विजयनगरीय आरवीडु डैनाष्टि" इति ग्रन्थे ५५२ तमे पृष्ठे (P. 552, Heras, *Aravidu Dynasty of Vijayanagar*) किञ्च—

(ग) "एपिग्राफिया इण्डिकार्या" १३ तमे सम्पुटे ३४६ तमे पृष्ठे च (P. 346, of Ep. Ind. XIII). एतद्विषये सुस्पष्टं लेखो दृश्यते ॥

(घ) श्रीमद्विजयीन्द्रतीर्था इमे वादे विजित्य वीरशैवगुरुं तत्स्वाधीनवृत्ति कुम्भकोणीय सर्वदेवालयाधिपत्यं जगृहुरिति कुम्भे-श्वरदेवालये मण्डपस्तम्भोपरिगते एकस्मिन्दीर्घे शिलाविताने उपलभ्य-मान शिलाशासना द्वृत्तोन्तोऽयमवगम्यते इति शृणुमः ॥

(ङ) जित्वा वादे वीरशैव गुरुं विस्तृत तन्मठम् ।
अपहृत्येह संवासं कृतवन्तं सतां हितम् ॥ १ ॥
(विजयीन्द्रस्तोत्रम्)

[2] चचारपृथिवीं सर्वां सिंहः क्षुद्रमृगेष्विव । शास्त्रज्ञा मूलतां प्राप्ताःजयीन्द्रपुरतस्तदा ॥ ब्राह्मणानजयत्सर्वांस्तर्कमीमांसवादकान् । दैवज्ञान्भिषजोभट्टान्मयिनश्शास्त्रपारगान् ॥ ये ये जनावेद्यविद्यास्तेते तेन विनिर्जिताः। सर्वान्विजत्य सर्वत्र चचार पवनो यथा ॥ "वि.वि."

नीश्वरैरनितरसुलभ वहुमान वितरण पुरस्सरमेते आद्रियन्ते स्म । किमधिकेन विजयनगरस्य शास्ता "अळिय रामराजा" भिधो महाराज एतेषां गुरुराजानां निर्दोषं वैदुष्यं प्रेक्ष्य सन्तुष्यन्नेमान् 'रत्नाभिषेकेणा' से वयत्[1] (१५४२–१५६५ ए.डि.) किञ्च तञ्जापुरनगराधिपतिः शेवप्पनायको नाम नृपतिरपि (ए.डि. १५३२–१५८०) १५७७ ए.डि. तमे संवत्सरे एतेषां सकलकलाकौशल्यमालोक्य स्वपरितोषफलायितमेकं "अरविलिमङ्गलं" नाम सुभिक्ष समृद्धं ग्रामं सामोदं समार्पयत्[2] ॥

एवं चतुःषष्टिकलाकलापकौशल्येन विलसतां विजयीन्द्रगुरूणां कीर्तिरासेतुहिमालयं सर्वा आशा अवरुध्य विरेजे । तदा तदाकृष्टहृदयाः सहृदयाः वहवः शास्त्रितल्लजाः, कविपुङ्गवाः, शैवाद्वैतादि पर राद्धान्तवैदग्ध्याः तद्दर्शनाय परीक्षणाय पराजयायचाहमहमिकयाऽभ्यधावन् । एषु प्रधानतया गण्यन्ते अप्पय्यदीक्षित ताताचार्य भट्टोजिदीक्षिताः । भट्टोजिदीक्षिता एतेषां व्याकरण नैपुण्यमुपवर्ण्यागण्यमानन्दमभजन् । अन्ये वेदान्तिनो व्रीडाधरितमुखा अपलायन्त । तदीयकवितामाधुरीधुरीणा गीर्वाणगिरोऽवधार्य कविमणयः तदैव स्वाभिमानं तत्यजुः ॥

---

[1] विद्वद्वरोस्माद्विजयीन्द्रयोगी विद्यासु हृद्यास्वतुल प्रतापः । रत्नाभिषेकं किल रामराजात्प्राप्याग्रलक्ष्मीनकृताग्रहारान् ॥ "राघवेन्द्रविजयः" सर्ग २ श्लो. २१ ॥

[2] (क) "एपि ग्राफिया इण्डिकायां" द्वादश तमे सम्पुटे एतद्विषयमुपवर्णितम् ॥ (Epigraphia Indica XII).

(ख) The Mysore Archaeological report for 1917, mentions another grant to Vijayeendratirtha by Sevappanayaka in 1580 A.D.

तर्कविदग्धाः तदीयवादवातोपसेवितेन तर्कतीव्रानलेन विशेषतो दग्धा एव । का कथाऽन्येषां तदातनानां पण्डितंमन्यानाम् ? असकृदधरीकृत चातुरीका अप्पय्य दीक्षिता एतेषां सुहृदेवावर्तन्त । तत्कृतानामद्वैतराद्धान्तानुरोधिनां नैक प्रबन्धानां खण्डनाय एतेऽपि चतुरधिकशतप्रबन्ध प्रवरानरीरचन्[1] । किञ्च इमे न केवलं सर्वशास्त्रविशारदाः ; अपितु सङ्गीतशिल्पादि चतुःषष्टिकलास्वपि कुशलतरा व्यलसन्[2] ॥

---

[1] (क) चकार बहुसंख्याकान्ग्रन्थानप्पय्यदीक्षितः । तान् जिगाययतिश्रेष्ठः स्वयंग्रन्थान् चकार ह ॥ वातार्थ भेदतत्वार्थ पूर्णान्सर्वत्र विश्रुतान् । विजयीन्द्रकृतै ग्रन्थैस्तद्ग्रन्थास्ते निराकृताः ॥ (विजयीन्द्रविजयः) ॥

(ख) दुर्वाद्यप्पय्य रचित ग्रन्थारण्यविनष्टये । चतुस्संख्याधिकशत ग्रन्थादीनां प्रचोदकम् ॥ (विजयीन्द्रस्तोत्रम्) ॥

[2] (क) चातुर्यैकाकृति र्यश्चतुरधिकशत ग्रन्थरत्न प्रणेता धूताराति प्रबन्धस्फुटविदित चतुः षष्टिविद्याविशेषः । सोऽयं नः श्रीसुरेन्द्रव्रतिवर तनयाद्वैतशैवासहिष्णुः । पुष्णातु श्रीजयीन्द्र स्त्रिभुवन विदित स्सर्वतन्त्रस्वतन्त्रः ॥ (श्रीमद्वादीन्द्रतीर्थकृत गुरुगुणस्तवनम्) ॥

(ख) शिष्यः श्रीविजयीन्द्र संयमिमणेः षड्दर्शनीदर्शिनः । तत्कारुण्य समेधिताखिल कलोत्कर्षः सुधीन्द्रो यतिः ॥ निर्मात्सर्य गुणोल्लसत्सुमनासां मोदायलक्ष्मीपतेः । प्रीत्यै मध्वमुनीशितुर्वितनुते सद्युक्तिरत्नाकरम् ॥ ७ ॥ [श्रीसुधीन्द्रयतिविरचित तर्कताण्डवव्याख्यायाम्] ॥

(ग) चतुःषष्टि कलाविद्या पूर्णोऽयमिति वन्दिभिः राजमार्गे घोष्यमाणं श्रीमध्वमतवर्धनम् ॥ (विजयीन्द्रस्तोत्रम्) ॥

(घ) चतुःषष्टिकलाविद्याजुषे विद्वन्महोजुषे जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोजुषे ॥ ७ ॥ सर्गः १ (राघवेन्द्रविजयः) ॥

यच्च कैश्चिदाधुनिकैर्विमर्शकंमन्यैः, वेदान्तविशारदैरुक्तं विजयीन्द्राप्पय्यदीक्षितयोः कालदेश सामानाधिकरण्यं नासीदिति । तत्सर्वथाऽऽग्रहमात्र कथितमनृतमिति सप्रमाणं निरूपयितुं प्रभवामः[1] ॥

---

श्रीविजयीन्द्राप्पय्यदीक्षितयोः कालदेश सामानाधिकरण्यम् ॥

[1] (क) तञ्जावूरु संस्थानाधीश्वरो शेवप्पनायकः (१५८० ए.डि.) श्रीविजयीन्द्रतीर्थेभ्यः, ग्राममेकमदादिति क्रिस्तशक १९१७ तम संवत्सरीय मैसूरु आर्किअलाजिकल् रिपोर्टाख्य ग्रन्थे प्रतिपादितः तत्रच—"त्रेताग्नय इव स्पष्टं विजयीन्द्र यतीश्वरः । ताताचार्यो वैष्णवाग्र्यो सर्वशास्त्रविशारदः ॥ शैवाद्वैतक साम्राज्यः श्रीमानप्पय्यदीक्षितः । यत्सभायां मतं स्वस्वं स्थापयन्तः स्थितास्त्रयः" ॥ इति वर्तते । एतेन विजयीन्द्राप्पय्यदीक्षितयोः कालदेश सामानाधिकरण्यमासीदिति समर्थितम् ॥

(ख) शेवप्पनायकः १५७७ ए-डि. तमे संवत्सरे श्रीविजयीन्द्रतीर्थेभ्यः—'अरविलिमङ्गला' ख्य ग्रामं समार्पयदिति 'एपिग्राफियाइण्डिकायां' द्वादशतमे सम्पुटे लेखो दृश्यते । अत्रापि विजयीन्द्रतीर्थानां कालः समर्थितः ॥

(The Arivilimangalam Plates of Sivappa Nayaka, Edited by T. A. Gopinatha Rau, *Epigraphia Indica XII.*)

(ग) किञ्च, विजयनगराधीशो अळिय रामराजमहीपतिरपि (1542-65 A.D.) रत्नाभिषेकादिना विजयीन्द्रानसेवयदिति राघवेन्द्रविजयाख्य ग्रन्थे वर्णितः । रामराज समकालिकत्व समर्थनेन विजयीन्द्राप्पय्यदीक्षिताः समकालिका इति सिध्यति ॥

(घ) वेळ्ळूरु जिल्ला अडियप्पाळ्याख्य ग्रामस्थ कलकण्ठेश्वर देवालये विद्यमान शिलाशासनानुसारेण अप्पय्यदीक्षितेन्द्राः क्रिस्तशक १५८० तम संवत्सर पर्यन्तमजीवन् इति सिद्धम् ॥

तर्कविदग्धाः तदीयवादवातोपसेवितेन तर्कतीव्रानलेन विशेषतो दग्धा एव । का कथाऽन्येषां तदातनानां पण्डितंमन्यानाम् ? असकृदधरीकृत चातुरीका अप्पय्य दीक्षिता एतेषां सुहृदेवावर्तन्त । तत्कृतानामद्वैतराद्धान्तानुरोधिनां नैक प्रबन्धानां खण्डनाय एतेऽपि चतुरधिकशतप्रबन्ध प्रवरानरीरचन्[1] । किञ्च इमे न केवलं सर्वशास्त्रविशारदाः ; अपितु सङ्गीतशिल्पादि चतुःषष्टिकलास्वपि कुशलतरी व्यलसन्[2] ॥

---

[1] (क) चकार बहुसंख्याकान्ग्रन्थानप्पय्यदीक्षितः । तान् जिगाययतिश्रेष्ठः स्वयंग्रन्थान् चकार ह ॥ वातार्थ भेदतत्वार्थ पूर्णान्सर्वत्र विश्रुताल् । विजयीन्द्रकृतै ग्रन्थैस्तद्ग्रन्थास्ते निराकृताः ॥ (विजयीन्द्रविजयः) ॥

(ख) दुर्वाद्यप्पय्य रचित ग्रन्थारण्यविनष्टये । चतुस्संख्याधिकशत ग्रन्थादीनां प्रचोदकम् ॥ (विजयीन्द्रस्तोत्रम्) ॥

[2] (क) चातुर्यैकाकृति र्यश्चतुरधिकशत ग्रन्थरत्न प्रणेता धूतारातिः प्रबन्धस्फुटविदित चतुः षष्टिविद्याविशेषः । सोऽयं नः श्रीसुरेन्द्रव्रतिवर तनयाद्वैतशैवासहिष्णुः । पुष्णातु श्रीजयीन्द्र स्त्रिभुवन विदित स्सर्वतन्त्रस्वतन्त्रः ॥ (श्रीमद्वादीन्द्रतीर्थकृत गुरुगुणस्तवनम्) ॥

(ख) शिष्यः श्रीविजयीन्द्र संयमिमणेः षड्दर्शनीदर्शिनः । तत्कारुण्य समेधिताखिल कलोत्कर्षः सुधीन्द्रो यतिः ॥ निर्मात्सर्य गुणोल्लसत्सुमनासां मोदायलक्ष्मीपतेः । प्रीत्यै मध्वमुनीशितुर्वितनुते सद्युक्तिरत्नाकरम् ॥ ७ ॥ [श्रीसुधीन्द्रयतिविरचित तर्कताण्डवव्याख्यायाम्] ॥

(ग) चतुःषष्टि कलाविद्या पूर्णोऽयमिति वन्दिभिः राजमार्गे घोष्यमाणं श्रीमध्वमतवर्धनम् ॥ (विजयीन्द्रस्तोत्रम्) ॥

(घ) चतुःषष्टिकलाविद्याजुषे विद्वन्महोजुषे जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोजुषे ॥ ७ ॥ सर्गः १ (राघवेन्द्रविजयः) ॥

यच्च कैश्चिदाधुनिकैः विमर्शकंमन्यैः, वेदान्तविशारदैरुक्तं विजयीन्द्राप्पय्यदीक्षितयोः कालदेश सामानाधिकरण्यं नासीदिति । तत्सर्वथाऽऽग्रहमात्र कथितमनृतमिति सप्रमाणं निरूपयितुं प्रभवामः[1] ॥

---

श्रीविजयीन्द्राप्पय्यदीक्षितयोः कालदेश सामानाधिकरण्यम् ॥

[1] (क) तञ्जावूरु संस्थानाधीश्वरो शेवप्पनायकः (१५८० ए.डि.) श्रीविजयीन्द्रतीर्थेभ्यः, ग्राममेकमदादिति क्रिस्तशक १९१७ तम संवत्सरीय मैसूरु आर्किय़लाजिकल् रिपोर्टाख्य ग्रन्थे प्रतिपादितः तत्रच—"त्रेताग्नय इव स्पष्टं विजयीन्द्र यतीश्वरः । ताताचार्यो वैष्णवाग्र्यो सर्वशास्त्रविशारदः ॥ शैवाद्वैतक साम्राज्यः श्रीमानप्पय्यदीक्षितः । यत्सभायां मतं स्वस्वं स्थापयन्तः स्थितास्त्रयः" ॥ इति वर्तते । एतेन विजयीन्द्राप्पय्यदीक्षितयोः कालदेश सामानाधिकरण्यमासीदिति समर्थितम् ॥

(ख) शेवप्पनायकः १५७७ ए-डि. तमे संवत्सरे श्रीविजयीन्द्रतीर्थेभ्यः—'अरविलिमङ्गला' ख्य ग्रामं समार्पयदिति 'एपिग्राफियाइण्डिकायां' द्वादशतमे सम्पुटे लेखो दृश्यते । अत्रापि विजयीन्द्रतीर्थानां कालः समर्थितः ॥

(The Arivilimangalam Plates of Sivappa Nayaka, Edited by T. A. Gopinatha Rau, *Epigraphia Indica XII.*)

(ग) किञ्च, विजयनगराधीशो अळिय रामराजमहीपतिरपि (1542-65 A.D.) रत्नाभिषेकादिना विजयीन्द्रानसेवयदिति राघवेन्द्रविजयाख्य ग्रन्थे वर्णितः । रामराज समकालिकत्व समर्थनेन विजयीन्द्राप्पय्यदीक्षिताः समकालिका इति सिध्यति ॥

(घ) वेल्लूरु जिल्ला अडियप्पाळ्याख्य ग्रामस्थ कलकण्ठेश्वर देवालये विद्यमान शिलाशासनानुसारेण अप्पय्यदीक्षितेन्द्राः क्रिस्तशक १५८० तम संवत्सर पर्यन्तमजीवन् इति सिद्धम् ॥

अत्रेदमवधेयं यत्–केचिन्मन्दमतय आहुः, श्रीमद्विजयीन्द्र वादिराजयोः समान विद्यावैभवयोः मिथो महत् मात्सर्यं परस्पर श्रेयो विघातकं समजनि इति । अत एव उभयकृतानां कृतीनां नातिप्रचार इति च, तत् विवेकशालिभिः सर्वथा अश्रद्धेयं, कस्याप्युन्मत्तस्य प्रलापमात्रमिति ब्रूमः । यतः—तत्तादृशागम्यमाहात्म्य शालिनोः अपरोक्षज्ञानिनोः सकलसद्गुण सम्पन्नयोः दोषलेशनिरवकाशयोः अनयोर्विषये सहसा दोषारोपणं कलुषमात्राय कल्पत इति प्रेक्षावद्भिरुपेक्षणीयोऽयं प्रवादः ॥

विजयीन्द्रा इमे आसेतुहिमाचलं सुक्षेत्राण्यटित्वाऽन्ते कुम्भकोणक्षेत्रमासाद्य वेदान्तविद्याप्रवचनप्रचारणादि स्वाश्रमोचितेन धर्म्यकर्मजातेन महान्तं कालं नयन्तः स्ववासेन सह्यजातीरस्याप्यपारं पावित्र्यमासादयामासुः ॥

(No. 395 of 1911. For remarks see also Y. Mahalinga Sastri's Paper on the date of Appayya Diksita, J.O.R. Madras, 1929, p. 140 160.)

(ङ) किञ्च, परस्परखण्डनमेतयो र्ग्रन्थादिषु दृश्यते, तथा श्रीराघवेन्द्रस्वामिनां मठे विद्यमान ताम्रशासन द्वारा विजयीन्द्रतीर्थाः—क्रि.श. १५९४ आरभ्य क्रि.श. १५९५ तम संवत्सर पर्यन्तमवर्तन्त इति सिध्यति ॥

एवञ्च, एपिग्राफिया इण्डिका, मैसूरु आर्किय़लाजिकल् रिपोर्ट्, ताम्रशासनादिभिः विजयीन्द्रतीर्थानां कालः क्रि.श. १५१४—१५९५ इति निश्चिनुमः । कलकण्ठेश्वर देवालयस्थशिलाशासनादिभिः अप्पय्यदीक्षिताः क्रि.श. १५८० तम संवत्सरपर्यन्तमजीवन् इत्यत्र नकापि संशीतिः । एतेन विजयीन्द्राप्पय्यदीक्षिताः समकालिका एव इति सिद्धम् । एतयोः कालदेश सामानाधिकरण्यं नासीदिति यदुक्तं विमर्शकं मन्यैः तत्तुच्छं, तत्सर्वथा आग्रहमात्रकथितमनृतमिति सर्वं रमणीयम् ॥

## एतैः कृतानां ग्रन्थानां केषांचिदत्र नाममात्रं निर्दिश्यते

श्रीमत्परिमळग्रन्थप्रकाशनमन्दिरस्य श्रीमत्सुमतीन्द्रवाग्विहाराख्य-प्राचीनग्रन्थभाण्डागारे विद्यमानानि ग्रन्थरत्नानि—

१ न्यायामृत गुर्वामोदः
२ न्यायाध्वदीपिका
३ न्यायामृत न्यायरत्नमाला
४ न्यायमौक्तिकमाला
५ न्यायमाला
[चन्द्रिका व्याख्या]
६ न्यायचंपकमाला
७ न्यायामृतोदाहृत जैमिनीय न्यायमाला
८ नयमञ्जरी
९ नयमुकुरः
१० वादमालिका
११ वाग्वैखरी
१२ श्रुतितात्पर्यकौमुदी
१३ श्रुत्यर्थसारः
१४ तुरीयशिवखण्डनम्
१५ भेदविद्याविलासः
१६ परतत्व प्रकाशिका
१७ उपसंहार विजयः
१८ मध्वाध्व कण्टकोद्धारः
१९ चक्रमीमांसा
२० अधिकरणमाला
२१ शैवसर्वस्व खण्डनम्
२२ अप्पय्यकपोलचपेटिका
२३ ब्रह्मसूत्र न्यायसङ्ग्रहः
२४ प्रमाणपद्धति व्याख्या
२५ रामानुजमतरीत्या सूत्रार्थः
२६ प्रामाणलक्षण टीकाव्याख्या
२७ कथालक्षण टीकाव्याख्या
२८ तत्वसङ्ख्यान टीकाव्याख्या
२९ तत्वोद्योत गूढभावप्रकाशः
३० विष्णुतत्वनिर्णय टीकाव्याख्या

## इतरत्र विद्यमानानि ग्रन्थरत्नानि—

३१ मध्वसिद्धान्त सारोद्धारः
३२ सर्वसिद्धान्त सारसारविवेकः
३३ सिद्धान्त सारसार विवेचनम्
३४ युक्तिरत्नाकरः [तर्कताण्डव-व्याख्या]
३५ प्रणवदर्पण खण्डनम्
३६ सन्मार्गदीपिका
३७ पदार्थसङ्ग्रहः
३८ चन्द्रिकोदाहृत न्यायविवरणम्
३९ नारायण शब्दार्थनिर्वचनम्
४० पिष्टपशुमीमांसा
४१ अद्वैत शिक्षा
४२ विरोधोद्धारः

---

## स्तोत्रग्रन्थाः

४३ नरसिंहस्तुतिः
४४ पापविमोचन स्तोत्रम्

## काव्यनाटकग्रन्थाः

४५ व्यासराज विजयः
४६ सुभद्राधनञ्जयः

## अनुपलब्ध ग्रन्थाः—

१ अवशिष्टप्रकरण पञ्चक व्याख्यानानि
२ तत्वमाणिक्यपेटिका
३ न्यायविवरण टिप्पणी
४ अणुभाष्य टिप्पणी
५ तत्वप्रकाशिका टिप्पणी
६ दशोपनिषद्व्याख्यानानि (१०)
७ न्यायदीपिका टिप्पणी
८ प्रमेयदीपिका टिप्पणी
९ आनन्दतारतम्यवादार्थः
१० मीमांसा न्यायकौमुदी
११ भेदचिन्ताणिः [भेदकल्पतरुः]
१२ भेदकुसुमाञ्जलिः
१३ भेदप्रभा [भेदरत्नप्रभा]
१४ भेदागम सुधाकरः
१५ कुचोद्यकुठारः
१६ लिङ्गमूलान्वेषण खण्डनम्
१८ उभयग्रस्त राहूदय नाटकम्

एवं साधुजन समूह सेविताः विद्वगण वादतोषिताः भूमिपतिभिरादृताः शरणीकृत स्वचरणानां भक्तजनानामनिष्टनिवृत्तिमभीष्ट समृद्धिं च सानुकम्पमनुगृह्णन्त अशीत्यधिकानि वर्षाणि भारतभूमिं पर्यभूषयन्। अन्ते वेदान्तविद्याविशारदान् षड्दर्शनाचार्यान् चतुःषष्टिकलाकोविदान् श्रीमत्सुधीन्द्रतीर्थ श्रीपादान् स्वीयवेदान्त साम्राज्य महापीठे अभिषिच्य [१५९५ ए.डि.] ज्येष्ठकृष्ण चतुर्दश्यां कुम्भकोणनगर एव कवेरकन्याधन्य पयःपवित्रिते तटिनी तटे सुन्दरतमं महत् बृन्दावनं स्वयं प्रविश्य उपविशन्तः जनतानयनात् तिरोभवन्॥

इदानीमपि स्वसमीपमासन्नानां विविध बाधावसन्नानां विषये प्रसन्ना भूत्वा तेषां दोषानशेषं नाशयन्ति। विना जातिमत वयोलिङ्गभेदं सर्वेप्यास्तिका नास्तिका अपि तदीय बृन्दावनं सकृदुपेत्य प्रदक्षिणनमस्कारादिना किञ्चिदुपचर्य इतरोपायदुरापा अप्यमिता अभीष्टसम्पदः प्राप्नुवन्ति इति प्रत्यक्षमिदं पृथिवीजुषामित्यलं विस्तरेण॥

एतादृश सच्चरित्र शालिभिरमीभिः चतुरधिकशत प्रबन्धप्रवराः प्रणीता इत्यनुपदमेवावोचाम। अहो! हन्त!! विषादास्पदमेवेदं यत्—तेषु प्रबन्धेषु अर्धस्य नाममात्रमपि न श्रूयते। श्रुतनामानोऽपि केचित् ग्रन्था न सामग्र्येणोपलभ्यन्ते। कथंचिदुपलब्धा अपि ते नाद्यावधि मुद्रयित्वा प्रकाशिताः। इमां दुरवस्थां निरस्तुकामा वयं महता परिश्रमेण, तत्र तत्र निलीनान् तद्ग्रन्थान् संगृह्य प्रकाशनकृते "श्रीमत्परिमलग्रन्थ प्रकाशनमन्दिरा" ख्यां काञ्चिन्नवीनां समितिमुद्घाटितवन्तस्स्मः। यत्सकाशात् प्रथमतयाऽवतारितो "मध्वाचार्याणां तत्ववादा" ख्यो ग्रन्थः एच्. के. वेदव्यासाचार्य, बि.ए., (आनर्स्) वेदान्तरत्न महोदयैः विरचितः प्राकाशि। तदविच्छेदेनैव अद्वितीयमपि "ब्रह्मसूत्रन्यायसंग्रहा" ख्यं प्रबन्धं द्वितीयतया प्रकाशितमस्माभिः, तदनु "द्वैतवेदान्ताख्यः" कर्णाटकभाषाप्रबन्धः, किञ्च श्रीमद्विजयीन्द्रयतीन्द्र विरचितं विष्णुसर्वोत्तमत्व प्रतिपादकं "शैवसर्व-

स्वखण्डना " ख्यप्रबन्धरत्नं इति द्वौ ग्रन्थौ प्रकाशितौ । ऐपमः नृसिंहाश्रम मुनिप्रणीत सव्याख्या भेदधिक्कारस्य खण्डनरूपं " भेद-विद्याविलासा " ख्यं श्रीमद्विजयीन्द्रगुरुरचितमिदानीं विद्वत्प्रपञ्चे प्राकाश्यं नयामः । विश्वसिमश्चानेन ग्रन्थेन सर्वे वेदान्तार्थ जिज्ञासवः साधवः महान्तमुपकारमासादयेयुरिति ॥

एतस्य प्रबन्धस्य प्रकाशनकार्येऽस्मभ्यं सदयं स्वमठीयं ताल-पत्रात्मकमेकं पुस्तकं तन्मुद्रणोपयोगि द्रव्यादिकं च प्रदाय, तथा ग्रन्थस्यास्य आज्ञापत्रमेकं अनुगृह्य इमां समितिं परिपोषयभ्द्यः, श्रीम-त्परमहंसेत्यादि विरुदालंकृत श्रीमन्मध्वाचार्य मुख्यसंस्थानाधीश्वर जगद्गुरु श्रीमद्राघवेन्द्र गुरुसार्वभौमानां मठीय दिग्विजय विद्यासिंहा-सनाधीशेभ्यः श्रीमत्सुयमीन्द्रतीर्थ पूज्यपादेभ्यः निरवधिकमाधमर्ण्य-मनवरतमास्थिताः स्मः । तेभ्योऽस्माकं कृतज्ञतोपस्कृताः परस्सहस्राः सन्तु प्रणामाः ॥

किञ्च कृतिमिमां साकल्येनानुवाच्य तत्वार्थगर्भितां सारतर-विषयोपबृंहितां विस्पष्टविविधविषय सङ्कुलां ललितमधुर शैलीमनो-हरां पीठिकां विलिख्य उपकृतवभ्द्योऽस्मत्सुहृद्वरेभ्यः डा. आर्. नाग-राजशर्मभ्यः, एम्.ए., एल्.टि., पिएच्., डि. इत्यादि बिरुदभाग्भ्यः ; अस्मदभ्यर्थनमनुसृत्य महता परिश्रमेण सुललितमतिमनोहरं भेदावि-द्याविलास भावार्थसंग्रहमाङ्ग्ल भाषायां (Synopsis) विलिख्य, तथा भेदविद्याविलासस्य " श्रुतिसूची पत्रिका, शुद्धाशुद्धपत्रिका, मुख्यपद प्रदेशिन्यादि " (References of Sruties, Errata, Index) सज्जीकरणेनास्मानुपकृतवभ्द्यः अस्मत्सुहृभ्द्यो पञ्चनदस्थ (तिरुवादि) राजकीय कलाशालाध्यक्षेभ्यः श्रीयुत बि. एन्. कृष्णमूर्ति शर्मभ्यो [एम्. ए. महोदयेभ्यः] अपिच स्वकीयं हस्तलिखितमपरं पत्रात्मकं पुस्तकं वितीर्य अस्मदुद्योगं सफलयितवभ्द्यः, म । शा । प्र । महावि-

द्वान् विद्वन्मणि, प्रोफसर् ह्रि. वासुदेवाचार्येभ्यः तथा अस्मज्ज्येष्ठभ्रातृभ्यो म । श । प्र । यस्. वेणुगोपालाचार्यभ्यश्च आस्माकीनाः सन्तु कार्तज्ञ्योपज्ञा स्सहस्रं धन्यवादाः ॥

एतद्ग्रन्थस्थ पंक्तिपरिशोधनविषये स्वकीयं सर्वं कार्यमुपेक्ष्यापि महत्तरं साहाय्यमाचरितवद्भ्यः "विद्वद्भूषणं आस्थानविद्वान्" दुर्गं श्रीमाचार्येभ्यः, "न्यायविद्वान्, न्यायशिरोमणि विद्याभूषणं गुन्हाळु, वेङ्कोबाचार्येभ्यः "वेदान्तविचक्षण" कट्ट गुरुराजाचार्येभ्यः "न्यायविशारद" प्रोफेसर् तिरुवादि विजयीन्द्राचार्येभ्यश्च कृतज्ञतापूर्वकान् प्रणामान् समर्पयामः ॥

एतन्मुद्रणाय शुद्धप्रतिलेखने दोषपरिशोधनेत्र सश्रद्धं सावधानं च साहाय्यमाचरितवद्भ्यः प्रियवयस्येभ्यः रित्ति वेङ्कणाचार्येभ्यः नातिचिरेण एतद्ग्रन्थमुद्रापयितृभ्यो "कारोनेषन्" मुद्रणालयाधिकारिभ्यश्च अस्मदीया हार्दिकास्सन्तु धन्यवादाः ॥

अयि भोः सद्वैष्णवमत प्रचारभूताशया महाशयाः, भवन्निकटे समोदमिदं प्रार्थयामहे यत्—विषमतरेऽप्यस्मिन्काले, प्रतिक्षणमापतन्तीष्वपि अन्तरायपरम्परासु समीरसमय संवर्धन बद्धादरा वयं श्रीहरिवायुगुरुराज प्रसादबलमवलम्ब्य, तत्रभवतां समेषां विदुषां प्रोत्साहनं च प्रतीक्ष्य, प्रतिमासं प्रत्यब्दं वा कथं कथमपि अमुद्रितानमूल्यानस्मन्मत प्रबन्धानञ्जसा मुद्रयित्वा विबुधलोकोपकाराय प्रकाशयितुं कृतमतयस्स्मः । अस्मिन्सत्कार्ये सर्वैरपि विद्वज्जनैः स्वस्वोपलब्ध प्राचीनकृतिप्रदर्शन प्रदानादिसाहाय्येनास्माकमनवद्यमुद्यममिमं सफलीकृत्य श्रीमन्माधवमध्वयोरनुग्रहाय पात्रीभूयतामिति ॥

वैशाख शुक्लचतुर्दशी
नृसिंहजयन्ती,
नञ्जनगूडु,

इति विद्वज्जन वशंवदाः,
"साहित्यालङ्काराः, कवितिलकाः,"
राजा, श्री गुरुराजाचार्याः.

# Bhedavidyavilasa



By Dr. R. Nagaraja Sarma, M.A., L.T., Ph.D.,
*University of Madras, Madras.*

## INTRODUCTION

When at the present day Indian Philosophy happens to be in a supremely shocking chaotic condition brought about by certain prize-boys and Dictators who notwithstanding their colossal ignorance of the texts, truths, and traditions of the Indian Darsanas (metaphysical systems or philosophical and speculative systems) revealed and substantiated by the internal evidence furnished by their own works and publications intended for the purpose of pushing Indian Philosophy into focus of International awareness or cultural consciousness, yet, maladroitly claim and are mechanically acclaimed by the multitude to be leaders of Indian thought and expounders of Indian wisdom for the benefit of Western, European and American audiences, and when consequently, Indian misrepresntations and misinterpretations of Indian Philosophy are working greater have than Non-Indian misconceptions and misapprehensions, it beeomes the sacred duty of every genuine lover of the ancient Indian Philosophical classics to publish them on modern lines so that they might be rescued from oblivion and disappearance. "Sri Parimala Grantha Prakasana Mandiram," Big House, Nanjangud, is therefore to be sincerely congra-

tulated on the task undertaken, of publishing the works of *Sri Vijayindra Tirtha* who in the progressive evolution of the history of Indian Philosophy, has endeavored in a masterly manner to vindicate the Realism, Pluralism, and Theism of Madhva (Ananda Tirtha) after having controversially refuted the untenable and unfounded charges and criticisms levelled against them by *Appayya Dikshita.* In the 16th century, the game of Philosophy was played squarely and in perfectly sportsmanlike style, and Sri Vijayindra Tirtha's contribution to preserve intact the power and philosophical prestige of the *Dvaita Vedanta* should be deemed unique and unparallelled. It was *Sri Vijayindra Tirtha* who effectively silenced the stern and relentless opposition of *Appayya Dikshita* to the Dvaita Vedanta.

*Brahma Sutra Nyaya Sangraha* was the first work of Vijayindra to be published in the series. The work now issued is BHEDA VIDYA VILASA. As the very title of the work significantly conveys, the philosophical or metaphysical efflorescence of the doctrine or the discipline of difference forms the subject matter of this short, compact treatise in which Sri Vijayindra has argued in a marvellous style the basic and foundational doctrine of the Dvaita Vedanta that Reality is rooted in difference. In the course of this brief introduction, let me place before the readers the main and significant conclusions argued by Sri Vijayindra.

The category of difference (Bheda) is the central constituent of Reality. The term difference (Bheda) does not necessarily mean or connote any antagonism

or incompatibility. The countless objects of the Universe, animate and inanimate, sentient and non-sentient (Jiva and Jada) are characaterised by their own independence and individuality. This factual, constutitive, structural and fuctional independence and a like individuality are the birthright of every object, and more important and valuable than political and economic independence and individuality. Reality is based on tripartite categorisation. The Jiva or the Finite-self is one category. The Jada the Finite-not-self is another. Isvara or the Lord-Supreme is another. Each furnishes a convenient point of departure, and the three basic or foundational categories are responsible for the projection of the philosophic scheme of quintuple difference. (Pancha-Bheda.) It is this philsophic scheme of difference that is argumentatively demonstrated by Vijayindra to be based strictly on the sanction and guarantee of the Pramanas.

The first section is known as the "Pratyaksha-Pariccheda." It may at the very outset be stated that "Bheda Vidya Vilasa" is a direct controversia refutation of the work "Bheda Dhikkara" of Nrisimhasrama (Benares Sanskrit Series 1904 Sanskrit Text—a "Free rendering" into English Madras University Bulletin 1936) *ipsissima verba* from which is cited first and subsequently criticised. With a wealth of striking and illuminating details and with all the dialectical paraphernalia of philosophic debate and controversy, Vijayindra has established the thesis that Reality stands rooted in diffrence without which the strucural and functional individuality and indepen-

dence of the countless entities of the Universe cannot be guaranteed and maintained. Indian Philosophy is strictly based on *Pramanas*, guarantors of valid knowledge. The first or the opening section is devoted to a demonstration of the thesis that *Pratyaksha* (sense-awareness) is quite competent to reveal Difference that is omnipenetrative of Reality. The section concludes with the emphatic declaration that in correct and flawless perception of the difference between the Finite and the Supreme Lord and a like perception of the difference between one finite self and another, *Pratyaksha* or sense-awareness stands supreme and unstultified, sanctioning and guranteeing the validity of the perception. The contention that the difference may be an artificial and unreal one is successfully refuted. The difference is established to be natural birthright, real and inalienable. (... Jevesvara-bhedona-aupadhikah-kimtu-svabhavikah. Evam-jeevanam-pramanam).

The second section centres round the demostration of the category of difference on the basis of Inference. (Anumana) several syllogisms of polished and perfected logical technique have been coined and constructed by Vijayindra and sometimes others are reproduced and restated from the classics of his predecessors the cardinal import of which is that difference between the Finite and the Supreme and difference between one Finite self and another are sanctioned and guaranteed by the evidence furnished by Inference. (Anumana.) The Pramana Arthapathi

(a variety of indirect demonstration or proof the essence of which is that, if a given thesis or concept be denied certain well-established facts become inexplicable), is also argued as establishing the Reality of difference.

The third section is devoted to an examination of the sacred texts (Sruti) relating to the central concept of difference. The celebrated monistic text "Tattvamasi" and the equally celebrated dualistic text "Dva-suparna ..." and other corroborative citations are discussed at length and the conclusion is established that the Doctrine of difference has the sanction and support of sacred Scripture.

The fourth (final) section deals with the philosophic possibility of the concept of difference itself. Monistic dialecticians like the author of the "Khandana-khandakhadya" have simply excelled themselves in the exhibition of logical legerdemain and argued doubtless to their own satisfaction, not to mention the admirational acquiescence of their admirers, that at the slightest or lightest touch of philosophical analysis the concept of difference itself vanishes into airy nothingness. If X differs from Y, there are three entities in the transaction. There is difference first and foremost. It is Bi-focal. Secondly, there is the subject of difference. Thirdly, there is boundary or the frontier of difference. (Bheda Dharmi Pratiyogi) Monists have argued that in view of the philosophic and conceptual impossibility and unintelligibility of all the *three*, difference stands stultified. Sri Vijayindra has easily demolished the imposing Monistic structure

which has in fact collapsed like a structure of cards. Difference is shown to be the inalienable birthright of the cosmos and cosmic constituents which however does not mean any antagonism or incompatibility. Class differs from genus, order from order, individual and so on and so forth with the result that each entity enjoys its own independence and individuality. It must be obvious that in the case of non-sentient and inanimate creation there is no awareness of the said independence, but, from the standpoint of the sentient, it would require no proof that even a minutest particle of dust in eyes can seriously hamper the activities of the mightiest. That way the non-sentients have a striking way of having their independence impressed on the sentient. Sri Vijayindra has convincingly demonstrated that in respect of the inseparable tripartite of the nature and constitution, the subject, and boundaries or frontiers, the category of *difference* (Bheda) should be deemed philosophically the most adequate and satisfying.

There is no need to force down the throat of readers any preconceived judgment. Impartial and dissintered students of philosophy and those who have in them the real and genuine research-instinct would easily realize that Vijayindra Tirtha's "Bheda Vidya Vilas" constitutes a full, final, closely-reasoned and convincing refutation of the monistic contention of the philosophic untenability and unintelligibility of the category of difference. Sri Vijayindra has ably and alertly argued an excellent, rationally and philosophically unexpurgated case for the *Realism*, *Pluralism* and *Theism* of Madhva.

It is interesting to note that reference is made to Vijayindra's another work "AAMODA" (p. 24) and to yet another "ADVAITA SIKSHA" (p. 27) in which are to found more detailed and elaborate discussions of the problems raised.

It is nothing surprising that unique and unparallelled as is the contribution of Vijayindra to Indian Philosophy one would not find any exposition or discussion of his work in any of the publications, flamboyantly styled like "Indian Philosophy," "History of Indian Philosophy," "Oullines of Indian Philosophy" and so forth, that have emanated from modern Universities, simply because, Sri Vijayindra's work can be understood only by first-rate Sanskrit-classicists, and certainly not by modern interpreters of Eastern Wisdom to the West who pathetically rely on translations of the Sanskrit classics attempted by Orientalists and Indologists in Europe and America, the result being a lively heightening of the total effect of the entire comedy of errors.

It may not be out of place in this context to mention one of Vijayindra's work "Madhva-adhva-kantakoddhara" was criticised by a modern Pandit in Mysore who did not even take the trouble of ascertaining the precise import of the language used by Vijayindra. A suitable vindication of Vijayindra has been published by the present writer. Another ludicrous attack has been launched against Vijayindra by another Mysorean a teacher of philosophy who thinks that Vijayindra is not a sufficiently orthodox follower or champion of Madhva as he has observed in his

" Kantakoddhara " that even God's Omnipotence does not over-ride Nature's Order and Constitution. For instance a mare's Nest can never be a creation of the Almighty. Such foolish and frivolous attack would convincingly demonstrate that Vijayindra's work can be correctly understood only by the intellectual and philosophical aristocracy trained in the traditional methods of the study of Sanskrit classics under the proper types of Pandits. However unpleasant to some the truth has to be told that the works of Vijayindra are not intended for every Tom, Dick and Harry who may maladroitly attempt to teach and write on Indian Philosophy with a smattering of Sanskrit, nodding acquaintance with the Devanagari script and with Apte's dictionary as *vade mecum.*

It is the sacred duty of every lover of ancient Indian Philosophical classics to patronise and encourage the highly commendable work of the "Parimala Grantha Prakasana Mandiram " in issuing the works of Sri Vijayindra Tirtha.

Kumbakonam and Madras.
*10th May 1945.*

R. NAGARAJASHARMA.

# विषयानुक्रमणिका



अनुमानपरिच्छेदविषयानुक्रमणिका पृ. पृ.



श्रुतिपरिच्छेदः

---

चतुर्थःपरिच्छेदः—भेदस्वरूपसमर्थनम्

मैसूरु कारोनेषन् मुद्रणालये मुद्रापितम्, १९४५.

॥ श्रीमन्मूलरामो विजयतेतराम् ॥

जगद्गुरुश्रीमद्विजयीन्द्रतीर्थश्रीपादविरचितः

# भेदविद्याविलासः



## ॥ प्रत्यक्षपरिच्छेदः ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीमल्लक्ष्मीहयग्रीवाय नमः ॥

उच्चैरारुह्य नीचैः पतति निजजनद्रोहकृत्सत्यमित्थं
वस्तु व्याहर्तुकामः किल दनुजकुलं पाणिजप्रोतमभ्रे ।
उत्क्षिप्याधः क्षिपन्मे पदभजनपरं रक्षितैवं सदेति
प्रह्लादे दत्तदृष्टिर्नतजनमजहन्पौरुषः पातु सिंहः ॥ १ ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियस्सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ २ ॥

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् ।
प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नं श्रीनृहरिं भजे ॥ ३ ॥

तं पाणिपल्लवं बाहुशाखं सद्विज[1]शोभितम् ।
विद्याहासलतापुष्पं मध्वकल्प[2]द्रुमं भजे ॥ ४ ॥

---

[1] सेवितम्. [2] तरुम्.

मध्वशास्त्रमहाचापमनुद्धार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे तं जयार्यं सदा भजे ॥ ५ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ६ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिसेविते ॥ ७ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
भेदविद्याविलासोऽयं तनुते तत्त्वविन्मुदे ॥ ८ ॥

नन्वेतदयुक्तम् परमेश्वरात्मनो नृहरेर्जीवजडात्मकप्रपञ्चाद्वास्तवभेदे मानाभावात् । प्रत्युत जडातिरिक्तोऽहमिति प्रतीयमानोऽर्थो न परस्माद्भिद्यते चेतनत्वात्, "तत्त्वमसी" ति वाक्यस्थपदार्थत्वाद्वा ब्रह्मवदित्यनुमानेन जीवपरयोरभेदस्यैव सिद्धेः । विपक्षे भेदग्राहकप्रमाणाभावात्, अभेदश्रुत्यप्रामाण्यप्रसङ्गाच्च नाप्रयोजकत्वमिति चेन्न । प्रमाणाभावस्यासिद्धेः, "नाहमीश्वर" इत्यादिप्रत्यक्षस्यैव सत्वात् । न च तत्प्रत्यक्षं भ्रमः, बाधकाभावात् । "अहमीश्वरस्सर्वज्ञ" इत्यप्रतीतेः । न च न तावदिदं प्रत्यक्षं चक्षुरादिजन्यम्, आत्मनि तदसम्भवात् । मनसश्च प्रमाणान्तरसहकारिणः[1] प्रमाणत्वायोगात् । अतः क्लृप्तकारणाभावात् सा भ्रान्तिरिति वाच्यम् । सुखाद्युपलब्धेः प्रमाणान्तराजन्यतया मनस एव प्रमाणत्वे भेदस्यापि तत्प्रमाणकत्वात् । न चातीन्द्रियेश्वरभेदः कथं प्रत्यक्षः? प्रत्यक्षप्रतियोगिकाभावस्यैव प्रत्यक्षत्वादिति वाच्यम् । अभावप्रत्यक्षे तु

---

[1] पृथक्.

प्रतियोगिप्रत्यक्षस्यातन्त्रत्वात् । मनसि घटत्वाद्यभावस्याप्रत्यक्षत्वात् । घटे मनस्त्वाद्यभावस्य प्रत्यक्षत्वाच्च । किञ्च यत्र हि यत्सत्त्वमुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः । तथा च जीवेतरभेदवदीश्वराभेदोऽपि अस्ति चेत्प्रत्यक्षः स्यादिति तदनुपलब्ध्या भेदः प्रत्यक्षः । न चायमौपाधिक एव, शरीरादिविशिष्टस्यैवेश्वरभेदानुभवादिति न भेदधीः प्रत्यक्षा स्यादिति वाच्यम् । अहमिति प्रतीतेः शुद्धात्मविषयत्वेन तत्प्रत्याय्यभेदस्याप्यनौपाधिकत्वादिति । अत्र केचित्—"न तावज्जीवेश्वरभेदे मनः प्रमाणम् । प्रमाणसहकारित्वादालोकादिवत् । प्रमाणस्य च चक्षुरादेः प्रमाणान्तरसहकारित्वादर्शनात् । चक्षुषः प्रमाणान्तरसहकारित्वे तत्राचाक्षुषत्वप्रसङ्गरूपबाधकस्येव चाक्षुषादिज्ञानेऽपि मनःप्रयोज्यजातिविशेषप्रसङ्गरूपबाधकस्य तुल्यत्वात् । न च मनसः प्रमाणत्वानुरोधेन चाक्षुषादिज्ञानेऽपि मनःप्रयोज्यजातिविशेषप्रसङ्ग इष्ट इति वाच्यम् । चक्षुरादिजन्यज्ञाने मानसत्वस्य जातिविशेषस्यानुभवपराहतत्वात् । मनःप्रमाणाभावस्याबाधितानुमानेन निश्चितत्वाच्च । मनसः सर्वज्ञानकारणत्वेन तदेव सर्वत्र प्रमाणम्, चक्षुरादित्वालोकादिवत्सहकारिमात्रमित्येककारणतापत्तिः । ननु सुखादिप्रत्यक्षे परिशेषान्मन एव करणम् । एवं मनसेदं पश्यामीत्यनुभवाद्यासङ्गानुपपत्तेश्च, बहिरपि मनः करणमिति चेन्न । सुखादिव्यवहारः स्वविषयकज्ञानजन्यः व्यवहारत्वादित्यनुमानाल्लाघवाच्च तदेकं सिध्यति । न च सुखादि[1]प्रत्यक्षस्योत्पादविनाशानुभवविरोधः । सुखादौ[2] सति पृथक्तदुत्पत्तिविनाशानुभवयोरभावेन सुख[3]ज्ञानं नष्टमित्याद्यनुभवस्य विषयनाशादिमात्रविषयत्वात् । न च विनिगमकाभावः, सुखाद्यनुभवदशायां दुःखाद्ययोगान्मानाभावाच्च । बुद्ध्यादिगोचरनित्यसाक्षात्कारस्यैकस्यानभ्युप-

[1] दुःखादि. [2] दुःखादौ. [3] दुःख.

गमे बुद्ध्यादेर्नियमेन मनसा ग्रहासम्भवेन तद्दशायां मयेदमनुभूयते वा न वा ? इदानीमिदमिच्छामि न वेत्यादिसन्देहस्स्यात् । ग्राह्यनिश्चयव्यतिरिक्तसंशयसामग्रीसत्वात् । ततश्चावस्थात्रयानुयायिदुःखादिसाक्षात्कारस्य नित्यत्वान्न तत्र मनः करणम् । मनसेदं पश्यामीत्यनुभवोऽपि तदावयोर्मनो जानातीत्यनुभवेन "कामः सङ्कल्पे" त्यादिश्रुत्या च दर्शनाद्युपादानस्य मनस आत्मनि दर्शनाद्यारोपनिमित्तत्वान्न विरुध्यते । व्यासङ्गस्त्वात्मनि परस्य क्रमिकज्ञानजनकशक्तयाऽन्यथोपपद्यत इति न तेनापि मनः करणं सिध्यति ॥

किञ्च, प्रमाश्रयत्वादपि न मनसः तत्र करणत्वम् । अहं जानामीति ज्ञानाश्रयतया प्रतीयमानस्याहमर्थस्यान्तःकरणरूपत्वस्य वक्ष्यमाणत्वात् । अतो भेदे न मनः प्रमाणमिति ॥

अत्र ब्रूमः—न तावत्प्रमाणसहकारित्वेन मनसो प्रामाण्यम् । रूपादिसाक्षात्कारे जनयितव्ये चक्षुस्सहकारिणोऽप्यालोकविशेषस्य धूमवत् वह्न्यनुमानत्वदर्शनेन व्यभिचारात् । बाधसत्प्रतिपक्षस्थले लिङ्गपरामर्शस्य [1] मानसतोऽपि स्वसमानविषयकप्रत्यक्षरूपपरामर्शान्तरे जनयितव्ये विशेषणज्ञानत्वेन विशेषणतावच्छेदकप्रकारकविशेषणज्ञानत्वेन वा प्रत्यक्षसहकारित्वोपलम्भाच्च । न च येन रूपेण प्रमाणान्तरत्वं यस्य तस्य न तेन रूपेण प्रामाणान्तरसहकारित्वम् आलोकादेस्तु वह्निव्याप्यत्वादिरूपेण प्रमाणान्तरस्य न तेन रूपेण प्रमाणान्तरसहकारित्वमिति वाच्यम् । इन्द्रियत्वेन प्रमाकरणस्यापि मनसो न तेन रूपेण प्रमाणान्तरसहकारित्वं, किं तु मनस्त्वेनेति तस्याप्यालोकादिवत्प्रमाणत्वोपपत्तेः । न च मनस इन्द्रियत्वे प्रमाणाभावः । "इन्द्रियाणां मनश्चास्मि, महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च, इन्द्रियाणि ददौ कं च पञ्च चेन्द्रियगोचरा" इति भगवद्वचनेन,

[1] अनुमानतोऽपि.

"कर्मेन्द्रियं तु पाय्वादि मनो नेत्रादिधीन्द्रियम्" इति कोशकारप्रसिद्ध्या च तत्सिद्धेः। ज्ञानमात्रं प्रति मनस्त्वेन, अपरोक्षज्ञानं प्रतीन्द्रियत्वेन, सुखादिसाक्षात्कारं प्रति प्रमाणान्तरासहकृतमनस्त्वेन च जनकत्वाभ्युपगमात्, अनुमित्यादावपरोक्षत्वस्य रूपादिसाक्षात्कारे मानसत्वस्य वा[1]प्रसङ्गः। न चेन्द्रियत्वेन मनसो जनकत्वे मानाभावः। सुखादिज्ञाने साक्षात्कारत्वानुपपत्तेरेव मानत्वात्। न च सुखादिसाक्षात्कारस्य साक्षिरूपतया न मनोजन्यत्वमिति वाच्यम्। उत्पादविनाशानुभवेन तस्य मनोजन्यत्वसिद्धेः। न च तदनुभवस्य दुःखा[2]द्युत्पादनाशविषयत्वमुक्तमिति वाच्यम्। ज्ञानोत्पादादिविषयत्वे बाधकाभावात्। न च साक्षिणैव सुखादिव्यवहारसिद्धेः, तद्विषयकमानसज्ञानकल्पने गौरवमिति वाच्यम्। सुखादिरूपविषयतत्सन्निकृष्टमनोरूपसामग्रीसत्त्वेन तस्याप्युत्पत्तौ बाधकाभावात्। न च मनसः सर्वज्ञानकरणत्वेन चक्षुरादेश्चालोकादिवत्सहकारिमात्रत्वापत्त्या एककारणतापत्तिः। एकस्य करणस्य एकजातीयकार्यं प्रति विजातीयसहकार्यपेक्षाया अदर्शनेन चक्षुरादेः सहकारित्वमात्रकल्पनानौचित्यात्। रूपादिज्ञाने चाक्षुषत्वादिवैजात्यानुपपत्तेश्च। न च सहकार्यवैचित्र्यादेव कार्यवैचित्र्योपपत्तिः। रूपादिज्ञानसहकारिणां परस्परं विचित्रत्वेनैकत्रापि बहुवैचित्र्योपलम्भप्रसङ्गात्। किं च मनसेदं पश्यामीत्याद्यनुभवेन मनसः प्रमाकरणत्वं दुर्वारम्। न च तदावयोर्मनो जानातीत्यनुभवेन "कामस्सङ्कल्प" इत्यादिश्रुत्या च दर्शनाद्युत्पादनस्य मनस आत्मनि दर्शनाद्यारोपनिमित्तत्वेनाप्युक्तानुभव उपपद्यत इति वाच्यम्। मनो जानातीत्यनुभवस्यैव गौणत्वेन उक्तानुभव[3]गौणत्वाकल्पकत्वात् न च विनिगमकाभावः। फलानुसारेण मनःकरणकत्वस्योक्तत्वात्। "कामः सङ्कल्प" इत्यादेरपि

---

[1] चा. [2] सुखा. [3] गौणत्वकल्पकत्वायोगात्.

नुभवपराहतत्वात् । एतेन घटत्वात्यन्ताभावस्तद्विशिष्टो वा तदधिकरणभेदसंसर्ग इति निरस्तम् । घटत्वात्यन्ताभावस्याप्याश्रयः क इति पृष्टः, यदि घटभिन्न इति ब्रूयात् तदा परस्पराश्रयापत्तिः । यदि च घटत्वरहित इति तदा आत्माश्रयापत्तिरित्यादिदोषप्रसरादिति ॥

तदपि न । त्वदभिमताभेदेऽप्यस्य सर्वस्यापि साम्यात् । नद्वितीयः विरोधात् । अथ यत्र प्रतीयते अभेदप्रतीतेर्भिन्नेऽपि सत्वात् । अथ यत्र प्रमीयते तर्हि यत्रास्ति तत्रास्त्वित्यादेरपि सुवचत्वात् । यदि च स्वयोग्याधिकरणे वर्तते, योग्यता च प्रमितरूपाकार्यान्नेयेति, तर्हि प्रकृतेऽपि तथास्तु, एवं स्वपक्षदोषाभावः परपक्षदूषणं ब्रह्मनिर्विशेषत्वञ्च किं तद्वति तदभाववति वेत्यादि विकल्प्य दूषणमूहनीयम् । एवंविधदूषणं स्वव्याघातकत्वात् । उपेक्ष्यञ्चास्तु वा स्वरूपमेव संसर्गः । नचातिप्रसङ्गः । फलेनैयस्य तस्य अनतिप्रसक्तफलेनैवानतिप्रसक्तयोपपत्तेः । फलानतिप्रसक्तिरपि कथमिति चेत्, अनुभवं पृच्छ नास्मान् । अतिरिक्तो वा संसर्गोऽस्तु । न च तस्यापि नियताधिकरण संसर्गस्य अतिरिक्तत्वेनानवस्थापत्तिः । प्राथमिकभेदस्यैव तत्संसर्गत्वात् । न च परस्पराश्रयतया नियाम्यनियामकाभावानुपपत्तिः । अस्योत्पत्त्याद्यप्रतिबन्धकत्वेन वनसिंहन्यायेनादोषत्वात् । एतेन यदि च तत्राप्यन्यएव संसर्गस्तदानवस्थापत्तिरित्यन्तमपास्तम् ॥

नन्वित्यादिरेतेनेत्यतः प्राक्तनग्रन्थस्त्वनभिमतपक्षदूषणत्वादेवोपेक्ष्यः । यदप्येतेनेत्यादिना घटत्वात्यन्ताभावस्य भेदसम्बन्धत्वे दूषणमुक्तं, तदप्यतएवापास्तम् । परस्पराश्रयस्य परिहृतत्वात् । न च घटत्वात्यन्ताभावस्य भेदसम्बन्धत्वेन भेदस्य तत्सम्बन्धत्वमुच्यते । किन्तु विशिष्टप्रतीतिनिर्वाहकत्वेन सिद्धे सम्बन्धेऽनवस्थापरिहाराय प्रमाणसिद्धयोस्तयोरेव परस्परसम्बन्धत्वं कल्प्यते । अतो नानुभवोबोधः । यौक्तिकानुभवस्य सत्वात् ॥

यदपि किञ्च तस्यैतस्माद्भेदसंशयव्यतिरेकानिश्चयदशायां अस्य ततो न भेदनिश्चय इति सर्वजनसिद्धमिति तस्यैतद्भेदनिश्चयोऽस्य ततो भेदनिश्चये कारणम् । यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्य तद्धेतुत्वात् । एवं तस्यैतस्माद्भेदनिश्चयेऽप्यस्य ततो भेदनिश्चयो हेतुरित्यन्योन्याश्रयः । न च वद्धर्मिकभेदः परमते तत्प्रतियोगिको भवति येन तस्य ग्राह्यतया तत्संशयादिप्रतिबन्धकस्स्यात् । अयं स न भवतीति ज्ञानस्य विशेष्यतया विशेषणतया वा तद्भेदविषयत्वायोगाच्च । तस्येन्द्रियासन्निकृष्टत्वात् । अयं स भवति न वेति संशयदशायां नियमेन स एतस्माद्भिन्न इति दर्शनेन प्रतिबन्धकत्वानुभवात् । न च प्रतियोगिनः धर्मितावच्छेदकाभावनिश्चय एव तद्धेतुरिति वाच्यम् । विनिगमकाभावात् मूलवृक्षे अग्रत्वाभावनिश्चयेऽप्यग्रवृक्षे मूलवृक्षभिदानिश्चयेनाभेदभ्रमदशायां तस्मिन् सत्यपि तददर्शनात् । अभेदनिश्चयस्य तत्प्रतिबन्धकत्वे च भेदसंशयस्यापि तथात्वात् । भेदज्ञानस्यापि हेतुत्वं वाच्यम् । तदत्यन्ताभावज्ञानमपि तदाश्रयभेदज्ञानं विना न सम्भवति । घटत्वादेस्तन्निरूपणं विनानिरूपणात् । प्रतियोगितावच्छेदकस्यैतद्वृत्तित्वाभावनिश्चयादिदशायां प्रतियोगिन्येव तद्धर्माभावानिश्चयाच्चेति ॥

तदपि न । एकस्य परस्माद्भेदज्ञानस्यापरस्मिन् स्वभेदज्ञानसामग्रीनियतत्वेन एकैकस्माद्भेदनिश्चये तस्यापि ततोन्यस्माद्भेदनिश्चय इति युगपदेवोभयनिश्चयेनान्योन्याश्रयानवकाशात् ॥ एतावानस्तु विशेषः । यत्र धर्मिद्वयं प्रत्यक्षं तत्रोभयत्रापि तद्भेदज्ञानं लौकिकं यत्रत्वेकमयोग्यं विप्रकृष्टं वा तत्र त्वेकत्रालौकिकमिति । एकत्र भेदसंशये अपरभेद संशयौचित्योपार्जित इति नापरभेदसंशयस्य नैकभेदनिश्चयप्रतिबन्धकत्वम् अतो न यत्संशयेत्यादिव्याप्तिबलादपि नैकभेदनिश्चयस्यापरभेदनिश्चयहेतुत्वं । अतोऽपि नान्योन्याश्रयावकाशः ।

त्वदुक्तन्यायेनैकस्यापराभेदनिश्चये अपरस्मिन्नेतदभेदज्ञानस्य कारणत्वा-त्या स्वव्याघातप्रसङ्गाच्च । एतेनायं स न भवतीति ज्ञानस्य विशेष्यतया विशेषणतया वा तद्भेदविषत्वायोगाच्च तस्येन्द्रियासन्निकर्षादिति निर-स्तम् । तदंशेप्यलौकिकसन्निकर्षस्योक्तत्वात् । एतेनैव, न च घटधर्मि-कोभेदः परमते तत्प्रतियोगिकोभवति । येन तस्य ग्राह्यतया तत्संशया-दिप्रतिबन्धकस्स्यादिति अनभिमतपक्षनिराकरणमप्यपास्तम् ॥

यदपि अयं स न भेत्यादिनाग्राह्यसंशयस्यापि प्रतिबन्धकत्वमु-पपादितं तदप्यत एवापास्तम् । ग्राह्यसंशयस्यप्रतिबन्धकत्वेऽपि ग्राह्यनि-श्चयस्य तन्निश्चयासाध्यतयान्योन्याश्रयाप्रसरात् । नचैवं यत्संशयेत्या-दिव्याप्तेस्तत्रैवव्यभिचारः । इष्टत्वात् । ग्राह्यातिरिक्तत्वेन विशेषणाद्वे-त्यन्यत्र विस्तरः । एतेनैव, न च प्रतियोगिनीत्यादितद्धर्माभावानि-श्चयाच्चेत्यन्तमपास्तम् । अनभ्युपगमात् । एतेन तस्मिन्नेतद्भेदविषयक-ग्राह्यातिरिक्तसंशयस्य प्रतिबन्धकत्वेपि तन्निश्चयस्याहेतुत्वेव्याप्तिनिश्च-यस्याप्यनुमितिहेतुत्वं न स्यात् । प्रतिबन्धकीभूतव्याप्तिसंशयाद्यभा-वस्यैव हेतुत्वं स्यादित्यपास्तम् । व्याप्तिसंशयाद्यभावमात्रहेतुत्वे अगृ-हीतव्याप्तेरप्यनुमितिप्रसङ्गरूपबाधकस्येवेह बाधकस्याभावेन तस्मात् एतद्भेदनिश्चयं प्रति तस्मिन्नेतद्भेदनिश्चयस्य हेतुत्वे प्रमाणाभावात् । वस्तुतस्तु नव्याप्तिसंशयोनुमितिप्रतिबन्धकः, संशयामनुमित्यभावस्य व्याप्तिनिश्चयाभावप्रयुक्तत्वोपपत्तेः । अत एव शाब्दपरमर्शानन्तरं प्रत्यक्षतो व्याप्तिव्यतिरेकनिश्चयेऽप्यनुमितेः व्याप्तिज्ञानविघटनस्य तत्रासम्भवात् । किन्तु व्याप्तिनिश्चये प्रतिबन्धकः । तत्र व्याप्तिनि-श्चयो न हेतुरिति नोक्तस्थवाव्याप्तिः ॥

यदपि प्रतिबन्धकसंशयादिस्थले निश्चयाभावस्यापि सत्वेन तस्यापि विनिगमकाभावेन प्रतिबन्धकत्वात् । निश्चयाभावरूपस्तस्मि-न्नेतद्भेदनिश्चयोऽपि प्रतिबन्धकाभावतयैव हेतुरित्यन्योन्याश्रयो दुर्वार

इति। तदपि न। प्रतिबन्धककालीनत्वमात्रेण न तस्य प्रतिबन्धकत्वम्। अतिप्रसङ्गात्। किन्तु संशयाभावदशायां निश्चयाभावेन कार्याभावस्य प्रमाणसिद्धत्वे तस्य प्रतिबन्धकत्वं कल्प्यम्। नचैतदस्ति। किञ्च प्रतिबन्धकसंशयादिस्थले निश्चयाभावस्यापि सत्वेनेत्येतदप्ययुक्तम्। तस्मिन्नेतद्भेदनिश्चयेऽपि तत्राप्रामाण्यशङ्कायामप्येतास्मिन् तद्भेदनिश्चयाभावेन तत्र त्वभिमत निश्चयाभावस्याभावात्। न चाप्रामाण्यशङ्काशून्यनिश्चयाभाव एव प्रतिबन्धकः। स च तत्राप्यस्तीति वाच्यम्। लाघवेनावश्यकत्वेन च संशयस्यैव प्रतिबन्धकत्वोपपत्तेः। यदपि एवं भेदनिरूपकप्रतीयोगित्वादिज्ञानस्यापि भेदज्ञानाधीनतयान्योन्याश्रयः। स्तम्भात्कुम्भस्य भेद इति प्रतियोगित्वादिविशिष्टस्तम्भादीन्निरूप्य भेदप्रतीतेः स्तम्भादौ तत्प्रतियोगित्वज्ञानाधीनत्वादिति॥

तदपि न। भेदज्ञाने प्रतियोतावच्छेदकप्रकारकप्रतियोगिज्ञानस्यैव हेतुतया प्रतियोगित्वज्ञानस्याहेतुत्वात्। न च विशेषणज्ञानतया तस्यापि हेतुत्वमावश्यकमिति वाच्यत्। न हि यद्यद्विशेषणतया भासते तस्य सर्वस्यापि ज्ञानं कारणम् किन्तु यद्विशेषणज्ञानं विना यद्विशिष्टज्ञानं नभवति तद्विशेषणज्ञानमात्रं तत्र कारणम्। एवञ्च अभावत्वप्रतियोगित्वयोरभाववृत्तिवेद्ययोर्ज्ञानं न कारणम्। किन्तु प्रतियोगिज्ञानमात्रं तद्विना प्रतियोगित्वादिवैशिष्ट्यबुद्धेरभावात्। एतेन प्रतियोगित्वांशेज्ञानातिरिक्तसन्निकर्षाभावादपि परस्य तत्कारणमिति विधान्तरेणान्योन्याश्रयोक्तिरपि प्रत्युक्ता। प्रतियोगिज्ञानस्यैव तदंशेऽपि प्रत्यासत्तित्वोपपत्तेः। नचान्यज्ञानस्यान्यप्रत्यासत्तित्वे अतिप्रसङ्गः, तद्विशिष्टज्ञानजनकत्वस्य नियामकत्वात्। यदपि प्रतियोगित्वज्ञानस्य कारणत्वे हेत्वन्तरमुक्तं धर्मिणस्सकाशप्रतियोगिनोभेदाननुभवे प्रतियोगित्वाननुभवादिति, तदप्यत एवापास्तम्। भेद तत्प्रतियोगित्वयोरेकवृत्तिवेद्यत्वस्योपपादितत्वात्॥

यदपि अपिच घटात्पटोभिन्न इत्यत्र मत्वर्थो भाति घटस्य भेद इत्यत्र षष्ठ्यर्थः तदुभयज्ञान[1]ञ्च सम्बन्धिनोर्भेदज्ञानाधीनं तदज्ञानदशायां नियमेन तदप्रतीतेः । न च वस्तुसद्भेदसत्तैवापेक्षिता, तदभावेऽपि तज्ज्ञादशायां तत्प्रतीतेस्तत्सत्वेऽपि तदज्ञानदशायां यमजयोस्तदप्रतीतेश्च । न च यमजयोस्सादृश्या[2]दभेदभ्रमात्सम्बन्धज्ञानाभावो नभेदाज्ञानादिति वाच्यम् । सत्यपिसादृश्ये भेदज्ञानदशायां सम्बन्धधीदर्शनात् । भेदाज्ञानमेव भ्रमादिप्रयोजकमिति दोषतयाऽपि तस्यैव वाच्यत्वात् । तत्र तदज्ञानातिरिक्त दोषकल्पनायां प्रमाणाभावात् । एवं विशेषणविशेष्यत्वज्ञानमपि तदधीनम् । अन्यथा विरुद्धयोर्ज्ञानासम्भवात् । तथाच भेदज्ञाने भेदज्ञानान्तरमपेक्षणीयमिति तद्भेदज्ञानाय तद्भेदज्ञानान्तरापेक्षायामनवस्थेति तदपि गलहस्तितम् । घटात्पटस्यभेद इति विशेष्यतया भेदप्रतीत्यनन्तरमेव पटोघटाद्भिन्न इति विशेषणतया प्रतीत्यभ्युपगमेन तत्र तत्सम्बन्धप्रतीतौ बाधकाभावात् । न च यत्र विशेष्यतयाप्रतीयते तत्र तत्सम्बन्धज्ञानस्यानवस्थादुस्थत्वापत्तिः । विशेषणविशेष्यभान सामग्र्या एव सम्बन्धभानसामग्रीत्वेन तत्र च भेदज्ञानस्य सामग्रीप्रवेशाभावस्योपपादितया अनवस्थानवकाशात् । यत्र सम्बन्धित्वादिना सम्बन्धो भासते तत्रैव सम्बन्धि[3]ज्ञानस्य कारणत्वेन इह संसर्गमर्यादयैव तस्यभानेन इह भेदज्ञानहेतुत्वासिद्धेश्च । यत्र द्वयोःप्रतियोगित्वेनभानं तत्रैव सम्बन्धिद्वयज्ञानस्य कारणत्वं इहतु भेदस्य अनुयोगित्वेन तज्ज्ञानस्य हेतुत्वासिद्धेश्च । अत एव पुरुषज्ञानाभावेऽपि दण्डप्रकारकपुरुषविशेष्यकज्ञानं सर्वेलिद्धमुपपद्यते ॥

यदपि न च वस्तुसद्भेदसत्तैवापेक्षतेत्यादि तदपि न । यमजयोर्भेदसम्बन्धाप्रतीतिंप्रति सादृश्यस्यैवाभेदभ्रमद्वारा तज्ज्ञाभावप्रयोजकत्वेन भेदाज्ञानस्य तत्प्रयोजकत्वासिद्धेः । न च सत्यपि सादृश्ये

[1] भानम्. [2] सादृश्यदोषात्. [3] सम्बन्ध.

भेदज्ञानदशायामभेदभ्रमादर्शनात् तस्यैव प्रयोजकत्वमिति वाच्यम् । भेदग्रहाभावे सत्यपि विसदृशयोरभेदभ्रमादर्शनेन सादृश्यस्याप्याव-श्यकत्वात् । न हि विसदृशयोस्सर्वदा भेदग्रहेण भाव्यमिति नियमोऽस्ति । न वा अभेदग्रहेण । यदप्येवं विशेषणविशेष्यत्वज्ञानमित्यादि तदपिन । प्राथमिकसविकल्पकेऽपि गौरयमित्याद्याकारे विशेषणविशेष्यभावविषयत्वस्य त्वयाप्यङ्गीकारेण तस्य भेदज्ञानाधीनत्वासिद्धेः । एतेन क्लृप्तकारणा[1]भावेतु कार्ये स्वप्नरथादीव माध्विकामेवेति निरस्तम् । एवमपि यत्र कारणं क्लृप्तं तस्यामाध्विकत्वोपपत्तेः त्वदुक्तन्यायेन कारणकल्पनस्य क्वाप्यसम्भवापातेन क्लृप्तकारणाभाव इत्यादि वाचोयुक्तेरयुक्तत्वाच्च ॥

वस्तुतस्तु स्वरूपमेव भेदो नान्योभावः । प्रमाणाभावात् । न च घटःपटो नभनीत्यादिबुद्धिः प्रमाणम् । अत्र हि घटस्य पटात्मकताविरोधी नञर्थः प्रतीयते । तच्च स्वरूपमेव अन्यथा तस्य पटात्मकतापत्तेः । त्वदभिमतान्योन्याभावस्यापि तत्सम्बन्धासिद्धेश्च । अतिरिक्तभेदमङ्गीकुर्वतापि प्रतियोग्यादितोभेदस्य स्वरूपरूपत्वाङ्गीकाराच्च । नचैवं घटात्पटोभिन्न इति धर्मधर्मिभावेन प्रतीत्यनुपपत्तिः भदाभावेऽपि तत्प्रतिनिधेर्विशेषस्य विद्यमानत्वेन तदुपपत्तेः । तदुक्तं—"भेदहीनेत्वपर्यायशब्दान्तरनियामकः विशेषोनाम कथितः सोस्ति वस्तुष्वशेषत" इति । विस्तरस्त्वन्यत्र द्रष्टव्यः । नचैवं संसर्गाभावोऽपि न सिध्येत् । आवश्यकभूतलादिनैव तत्प्रतीतिव्यवहारोपपत्तेः । अभावाधिकरणभूतलादेरेव प्रतियोगिविरोधित्वात् । त्वदभिमत संसर्गाभावस्यापि नियताधिकरण सम्बन्धासिद्धि प्रसङ्गाच्चेति वाच्यम् । अस्माभिः प्रामाणिकपदार्थमात्रस्यात्यन्ताभावानभ्युपगमात् । नचैवमपि असत एवात्यन्ताभावोधिकरणात्मा किं नस्यादिति वाच्यम् । अती-

---

[1] त्वा.

तानागतवर्तमानानन्त पदार्थानामभावत्वकल्पनापेक्षया एकस्यैवाङ्गीकारे लाघवात् । नचैवमपि प्रागभावादेरधिकरणात्मकत्व प्रसङ्गः । कार्योत्पत्त्यनन्तरं ध्वंसात्पूर्वमपि यथापूर्वमधिकरणस्य सत्वेन प्राक्ध्वंसाभावप्रतीति प्रसङ्गात् । नचैवं भेदस्याधिकरणात्मकत्वे कश्चिदति प्रसङ्गोऽस्ति । त्वयैव भेदबुद्धेरन्तस्वरूप विषयत्वाङ्गीकाराच्च । अस्मन्मतेत्यत्यन्ताभावस्यापि प्रामाणिकत्वेन तस्यात्यन्ताभावो नास्त्येवेति नतद्बुद्धेः प्रतियोगिस्वरूपविषयत्व प्रसक्तिः । एतेन स्वरूपभेदपक्षोऽपि नयुक्तः । भेदस्य विषयणविशेषण्यतयैव प्रतीतेः तत्रच दोषस्योक्तत्वादिति निरस्यम् ॥

यदपि अपिचाभेदविरोधिपदार्थ एव भेदपदात्प्रतीयते । न च घटादिस्वरूपं भेदः, पटादिमात्रात्मक तदभेदविरोधी तस्य तदुभयसामानाधिकरण्य धर्मधर्मिभावस्सत्वात् । न च पटस्य घटपटादिनिरूपितोऽन्यो भेदोऽस्ति । सप्रतियोगिकभेदस्य निष्प्रतियोगिकस्वरूपत्वानुपपत्तेः, घटभेदयो धर्मधर्मिभावानुपपत्तेश्चेति, तदपिन । भेदपदात्पटाद्यभेदविरोधित्वेन घटादिस्वरूपस्यैव प्रतीतेः । न च तदुभयसामाधिकरण्यादि दर्शनाद्विरोधानुपपत्तिः । सामानाधिकरण्येऽपि परस्परात्मात्मकत्वलक्षणविरोधस्य सत्वेनादोषत्वात् ॥

यद्वा अभेदनिषेध एव भेदप्रतीतिव्यवहारगोचरोऽस्तु, भेदपदात्प्रतीतेः सत्वाभेदो नपटादिमात्रात्मक इत्यादोषः । नचैवं तस्याप्रामाणिकत्वेन तन्निषेधरूपभेदस्याप्यप्रामाणिकत्वापत्तिः । रूप्यस्य द्वैतस्यात्यन्तासतश्चाप्रामाणिकत्वेन बाधगोचरस्य रूप्याभावस्याद्वैतस्यासद्वैलक्षण्यस्यचाप्रामाणिकत्वापातात् । न च निष्प्रतियोगिकस्य स्वरूपस्य सत्प्रतियोगिक[1] त्वानुपपत्तिः । त्वयापि ब्रह्मणः प्रपञ्चाभावत्वाङ्गीका-

[1] भेद.

रेण स्वव्याघातकत्वात् । यदि चाद्वैतश्रुतिबलात्प्रपञ्चाभावस्य ब्रह्मरूपत्वमभ्युपगम्यते, तर्हि प्रतीतिबलादुदाहृतस्मृतिबलाच्च प्रतीतस्य भेदस्यानवस्थापरिहाराय स्वरूपत्वमस्तु, दृश्यते चैकस्यैव देवदत्तादेर्देवदत्त्वादिना ज्ञाने तु जनकाद्यपेक्षत्वं पुत्रत्वादिना ज्ञाने तु प्रतीतिबलादुदाहृतस्मृत्यादिबलाच्च तदपेक्ष्यत्वञ्चेति यत्किञ्चिदेतत्तस्माद्भेदस्वरूपस्य सुनिरूपत्वात् जीवेश्वरादिभेदः सत्य एव ॥

यदपि स्वमते भेदप्रतीतिविषयोपपादनं अभेदनिषेध एव भेदः, इदमिदं नेतिप्रतीताभेदावरोधित्वेनैव तदनुभवात् । सच्चाभेदाधिष्ठानभूत सद्रूपश्चैतन्यमेव घटपटयोरिदं सदित्यनुवृत्त सदाकारणप्रतीतेरात्मैवेदं सर्वमिति सदात्मन एव सर्वप्रपञ्चस्वरूपत्वावगमाच्च । न च सदिदमित्यादौ सत्तेव प्रतीयते, नसद्रूपं चैतन्यमिति वाच्यम् । "सदेव सोम्येदमग्र आसीदि" त्यादि श्रुत्या असम्भावित बाधतयाच प्रतिपन्नचैतन्य स्वरूपसद्व्यतिरिक्तसत्तायां प्रमाणाभावात् । तस्यच घटा द्युपादानतया श्रुतिसिद्धत्वेन घटाद्यनुगतायास्तत्रतद्बुद्धिविषयत्वोक्तेश्चेति, तदपिन । इदमिदं नेतिनिषेध्यत्वेन प्रतिपन्नाभेदस्य वास्तवात्मस्वरूपत्वायोगात् । न चात एव निषेधस्य मायिकत्वमिति वाच्यम् । तस्याः कल्पनाया अभेदस्यात्मस्वरूपत्व सिध्यधीनत्वेनान्योन्याश्रयात् ॥

न च सदिदमिति प्रत्यक्षेणेदं सर्वमित्यादिश्रुत्याच तत्सिद्धिः, औपनिषदस्य ब्रह्मणः प्रत्यक्षविषयत्वासम्भवात् । श्रुतेश्च तदधीनत्वाद्यर्थपत्वेनोपपत्त्या त्वदभिमताभेद परत्वासिद्धेश्च । प्रत्यक्षस्य सत्ताविषयत्वेनाप्युपपत्तेश्च ॥

न च चैतन्यातिरिक्तसत्तायां प्रमाणाभावः, सदिदमित्यादिबुद्धेरेव तत्प्रमाणत्वात् । नचास्यास्सत्स्वरूपब्रह्मविषयत्वेनाप्युपपत्तेर्नसत्तासाधकत्वमिति वाच्यम् । "सदेव सोम्येदमग्र आसी" दित्या-

दिरेत सत्पदशक्तिग्रहणाय सत्त्वग्राहिप्रत्यक्षसापेक्षत्वेन तयाप्रत्यक्षविषयसमर्पणायोगात् । वैपरीत्यस्यैव न्याय्यत्वाच्च । वस्तुतस्तु तव ब्रह्मसद्रूपमपि नस्यात् । सत्वरहितत्वात् । न च सत्ववत्तद्रहितस्यापि सद्रूपत्वमविरुद्धमिति वाच्यम् । सत्तासतीत्यादि प्रतीतेस्सत्वस्यापि स्ववृत्तित्वेन सत्त्वरहितत्वासिद्धेः । त्वन्मते सत्वादिशब्दानां नैरर्थक्यप्रसङ्गाच्च, भावप्रत्ययार्थस्य वाधितत्वात् । न च प्रकृत्यर्थ एव भावप्रत्ययस्याप्यर्थः सर्वथानिरर्थक प्रत्ययस्य क्वाप्यव्युत्पन्नत्वात् । “ दारा ” इत्यादौ बहुवचनस्य क्वचिदर्थोऽस्त्येव एतेन अत एव सत्वविशिष्टमेव सदित्यपास्तम् । सत्वस्य तद्भेदे असत्वापत्तेरिति परास्तम् । सत्वस्यापि स्ववृत्तित्वस्योक्तत्वात् ॥

एतेन एवञ्च घटपटादिनिरूपिताभेदात्यन्ताभावो अविद्याकल्पनो घटपटाश्रितो घटःपटो नभवतीति प्रतीयते । जीवपरयोरिव बिम्बप्रतिबिम्बयोरिव च स एव घटान्पटो भिन्न इत्यपि प्रतीयते । उभयाश्रितविभागइत्रेदमसाद्विभक्तमितीति निरस्तम् । विभागस्यापि प्रत्येकपरिसमाप्ततया उभयाश्रितत्वे मानाभावात् । न च विभक्ताविति प्रतीतिरेव मानमिति वाच्यम् । प्रत्येकपरिसमाप्त परस्परनिरूपित विभागद्वयविषयत्वेनापि तदुपपत्तेः । दूरदेशवर्ति पदार्थद्वयवृत्तिविभागस्योभयाश्रितत्वे तद्वृत्तिरूपादेरतथात्वप्रसङ्गाच्च । तथाच भेदोऽपि परस्परनिरूपितः परस्परवृत्तिभिन्न एव एवञ्च यत्संशयेत्यादिनोक्तदोषास्त्वन्मतेपिप्रसज्जेरन् । एतेन एवंसति यत्संशयेत्यादिदोषोऽपि नावतरति, ग्राह्यसंशयानिरिक्त भेदसंशयस्य प्रतिबन्धकत्वादिति निरस्तम् । उभयाश्रितैकभेदस्य निरस्तत्वात् । यदपि भेदश्चास्माकं साक्षिभास्य इति न तत्रप्रतियोगित्वादिज्ञानापेक्षा धर्मिप्रतियोगिस्वरूपस्य तत्स्वरूपत्वाच्च नातिप्रसङ्ग इति, तदपि न । अज्ञातघटादिपदार्थस्य घटादिभेदप्रतीत्यदर्शनेन साक्षिणोभेदविषयत्वेऽपि प्रतियोगित्वादिज्ञानस्य सह-

कारितया अवश्यवाच्यत्वेनोक्तदोषानतिवृत्तेः, प्रतियोगित्वादेर्धर्म्यादिस्वरूपत्वेऽपि त्वदुक्तन्यायेन भेदनिरूपकत्वादिना रूपेण ज्ञेयत्वेन त्वदुक्तदोषानतिनिवृत्तेश्चेति सर्वमनवद्यम् ॥

तस्मा ब्राह्मसंसारी त्येवमादि प्रमाणतः ।
जीवेभ्योऽत्यन्त भिन्नोऽयं नृसिंह स्स्वास्तिदोस्तुनः ॥ १ ॥
आस्तामन्य प्रमाणत्वं भेदे सर्वस्य वस्तुनः ।
भेदं विदूषयन्नेव भवान्भेदस्य साधकः ॥ २ ॥

इति श्रीमत्परमहंस परिव्राजकाचार्याणां श्रीमन्सुरेन्द्रतीर्थ पूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्र श्रीमद्विजयीन्द्र-भिक्षुणा विरचिते भेदविद्याविलासे भेदस्वरूपसर्थनं नाम चतुर्थः परिच्छेदः समाप्तः ॥

॥ श्रीहरिः ॐ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ समाप्तोऽयं ग्रन्थः ॥



"विद्यात्मानिभिदाबोधः"



# Sri Parimala Publishing House,

NANJANGUD.

---

# Next Publications

## "ASPECTS OF DVAITA PHILOSOPHY"

(Sri Suyamindrathirtha commemoration Volume)

Comprising essays on Philosophy, religion, ethics, literature, etc., by Great Scholers of the Age. Book to be presented to H. H. The Swamiji of Sri Raghavendra Swamy Mutt on the occasion of his Jublee function.

(1) Vedanta Ratnam,
H. K. VEDAVYASACHAR, B.A., (Hons.)

(2) Sahityalankara, Kavitilaka,
RAJA S. GURURAJACHARYA,

*Joint Editors.*

## Volumes in Preparation

1. Authorised editions of the "Biography of Great Raghavendra Swami in English and Kannada by Joint authors. H. K. V. and R. S. G.

2. "Sandhya Bhashya." Critically edited with introduction, etc., by "Vedanta Ratnam" H. K. Vedavyasachar, B.A., (Hons.).

3. "A brief life sketch of Sri Madhva Charya." (Anu Madhva Vijaya) with the commentary of Sri Raghavendra Swamiji. Critically edited by Joint editors. H. K. V. and R. S. G.

# A SYNOPSIS

OF THE

# BHEDAVIDYĀVILĀSA

BY

**B. N. KRISHNAMURTI SARMA, M.A.,**

Principal,

The Rajah's College of Sanskrit and Tamil Studies, Tiruvadi.

## I

The *Bhedavidyavilasa* is a short polemical classic of Sri Vijayindra Tírtha (C. 1514-95) the grand-preceptor of the illustrious Sri Raghavendra Svami. It is a defence and re-establishment of the reality of difference between Jiva and Brahman, as a fundamental and foundational fact of Experience, Reason and Revelation. It is a word for word refutation of the arguments contained in the *Bhedadhikkara*[1] of Nrsimhasrama whose *Tattvaviveka* was completed in 1558 A.D. There is a Visistadvaitic refutation of the *Bhedadhikkara* under the name of *Bhedadhikkaranyakkara*.

Vijayindra was a close contemporary of the sixteenth century polymath and leader of the Saiva and Advaita Systems: Appayya Diksita, who is credited with over a hundred works. Some of the Diksita's tracts in refutation of Madhva Siddhanta have been assailed by Vijayindra in his turn. The Diksita, though an all-round scholar and a

[1] Printed in Benares Sanskrit Series, 1904.

cosmopolitan in outlook, bore a special animus against the system of Madhva which was his *bete noire*. This is betrayed by the specially offensive ring of the titles[1] of some of his works in criticism of the Madhva system like the *Madhvamata Vidhvamsana* and the *Madhvamata-mukhabhanga* and by the deplorable bad taste and odiousness of such comparisons drawn by him (to the उपसंहारन्याय of Madhva) as :—

" यवनगुरूपदिष्टशौचप्रक्षालनपौर्वापर्यव्यत्यासवदुपेक्षणीयः "

(Upakramaparakrama).

It is therefore gratifying to note that in his spirited replies to the criticisms of the Diksita, Vijayindra has not once descended to the level of the unparliamentary expressions of his adversary even in the face of provocation. Nrsimhasrama is generally believed to have preceded Appayya and to have inspired his devotion to Advaita. The period of Vijayindra was thus one in which Madhva Siddhanta was on its trial in the philosophical arena. Vijayindra's guru, the celebrated Vyasaraya, had carried the warfare into the enemies' camp and had thrown bomb-

---

[1] It is no wonder then that Satyanatha and Narayana Panditarya use equally pungent language in reply to the Diksita :

सदापेये दीक्षितस्य मृधे दुरभिमानिनः ।
पातयामि शिरस्यद्य गुर्वीमभिनवां गदाम् ॥

(Abhinavagada I, 1)

मन्वाद्याः सदसद्विवेकनिपुणाः द्वैतैकनिष्ठा इति
भ्रान्ता येत्वविवेकिनः पशुसमाः द्वैतानभिज्ञत्वतः ।
हेयाहेयभुजोऽतितत्वानिपुणा ये ये भृशं पामरा
निष्कर्षः किल यन्मतस्य तादिदं धिक् धिक् तमेनं च धिक् ॥

(Advaitakalanala, i, 34).

shells upon it thro' his monumental polemics—the *Nyayamrta* and *Candrika*. The attacks were returned with fury by both Advaitins and Visistadvaitins of reputation like Madhusudana Saraswati, Nrsimhasrama, Sathamarshana Tatacarya, Mahacarya, etc. The later half of the sixteenth century in which Vijayindra Tirtha flourished was thus a period of intense philosophical struggle for ascendancy between the Dvaita and Advaita philosphies. Vijayindra was a direct disciple of the great Vyasaraya and had mastered the classics under that Saint and philosopher. He was a prolific writer in the cause of Dvaita Vedanta and takes rank among the most powerful champions and active promoters of the system subsequent to Vyasaraya when critics found their tongues and became vociferous. He ranks with Vadiraja, Vidyadhisa and Tarangini Ramacarya, as one of the sources of post Vyasaraya polemics. He was a most powerful controversialist but at the same time a very dignified writer. He writes a terse and passionless style. The *Gurugunastava* attributes to him the authorship of a hundred and four works—(चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रन्थरत्नप्रणेता). He was honored in the court of the famous Nayak Ruler of Tanjore—Sevappa Nayaka (1560–1580) who granted to him the village of Arivilimangalam in 1577 A.D. The grant makes a specific reference to the crushing defeats inflicted by Vijayindra on the Mayavadins—an allusion presumably to his controversies with Appayya and others—

पदवाक्यप्रमाणज्ञशेमुषी जितवादिने ।
मायावादिमतच्छेदकोलाहलभरोक्तये ॥

and pays a handsome tribute to his saintly personality in elegant metaphor :

" मध्वाचार्यमतोद्यानसञ्चरत्तरबार्हिणे "

(as the royal peacock sporting in the princely park of Sri Madhva's system.)

As Appayya Diksita is known to have built and endowed a temple of Siva in his native village of Adayappalayam in 1582 A.D., the contemporaneity of Vijayindra and Appayya is uncontestable. The frantic attempts of Mahamahopadhyaya Anantakrishna Sastri therefore, in his introduction to his edition of the Nyayamrta and connected works (Calcutta Sanskrit Series No. 9), to post-date Vijayindra on grounds of (1) his (supposed) authorship of a commentary on the Nyayamrita included in the edition—*viz.*, the *Nyayamrita-Kantakoddhara*, (2) the alleged absence of evidence in support of their contemporaneity and (3) "Appayya being already very old when Vijayindra began to flourish" and so on, have already been exposed by me [1] on the basis of textural and epigraphic evidence and the attention of readers is invited to them. To mention only the most important of them (1) the *Nyayamrtakantakoddhara* is not a work of Vijayindra in as much as it criticises certain interpretations contained in the *Amoda* of Vijayindra himself. (2) Secondly, there is irrefrageable evidence of an inscription, dated 1580 A.D. of Sevappa that Vijayindra, Appayya and Taṭacharya used to meet and uphold their respective systems in the court of the King :—

"त्रेताग्नय इव स्पष्टं विजयीन्द्रयतीश्वरः ।
ताताचार्यो वैष्णवाग्र्यः सर्वशास्त्रविशारदः ॥
शैवाद्वैतैकसाम्राज्यः श्रीमानप्पय्यदीक्षितः ।
यत्सभायां मतं स्वंस्वं स्थापयन्तः स्थितास्त्रयः" ॥

(Text by the kind courtesy of the Director of Archæology, Mysore, cited first in my paper on Vijayindra in the Annamalai University Journal I).

---

[1] New Ind. Ant. II, pp. 658-71.

(3) The evidence of Manuscripts conclusively establishes that Vijayindra did reply to many of the works of Appayya :—

उपक्रम पराक्रम * उपसंहारविजय (T. P. L. 8086)

शिवतत्वविवेक * परतत्वप्रकाशिका (Mys. C. 939)

मध्वमताविध्वंसनम्
मध्वमतमुखभङ्गः } * मध्वाध्वकण्टकोध्दारः (Printed)
*alias*
मध्वतन्त्रमुखभूषणम्

Nrsimhasrama :—

भेदधिक्कार * भेदाविद्याविलासः
अद्वैतदीपिका अद्वैताशिक्षा (Udipi Ms.)

and Tatacarya (Srinivasa Sathamarsana of Kumbakonam).

प्रणवदर्पण * प्रणवदर्पणखण्डनं (Madras D. C., X. 4798).

विजयींद्रपराजय * सिध्दान्तसारासारविवेक (Mys. A.88).

That he was a full contemporary of Appayya is thus proved by epigraphic and other evidences available for both. It is needless to pursue the point further.

I would however like to take this opportunity of appealing to the Svami of the Sri Raghavendra Svami Mutt, to follow up the publication of the long looked for *Bhedavidyavilasa* with the speedy publication of all the other available works of Vijayindra—particularly the above mentioned controversial works and to vindicate the prestige of Vijayindra once for all against the cheap and fashionable crticisms of Pandits like Mm. Ananta Krishna Sastri. The custodians of Madhva Philosophy have been too long remiss in their duties to the great makers and saviours of the system and it is high time for them to make amends.

But to revert to Vijayindra, it is obvious that he had rendered signal services to the cause of Madhva philosophy at a very critical time in its history, by putting down the organised opposition to its spread and popularity in the south and that but for his powerful counter—criticisms then and there, the system would have lost ground irreparably in the Tamil Country. It would be evident from the lives of these great men that they chose particular regions to work for the spread of their faith and it is a matter of no mean gratification to those in the Tamil Country that saintly souls like Vijayindra, Sudhindra, Raghavendra and Sumatindra chose to live among them and leave indelible marks of their influence on the times.

It is therefore a matter of supreme gratification that the long awaited publication of the matchless works of Vijayindra is to be led by the publication of his *Bhedavidyavilasa*—thanks to the enlightened efforts of my young friends Sri Gururajacharya, Vedavyasacharya and others who as distinguished sons of the respected Svamis of the Mutt of Sri Vijayindra and representatives thereof, have done the right thing by the world of scholarship, of which they are already the ornaments. It is a happy coincidence that the *Bhedavidyavilasa* is being published under the patronage of Sri Suyamindra Tirtha, the present head of the Mutt, on the happy occasion of the grand celebrations of the twelfth year of his succession to the hoary pontificate. May we urge on this occasion the desirability of issuing in the years to come, a memorial edition of the complete works of Vijayindra? That would indeed be the most suitable monument to the memory of the great Saint. The non-publication of many of the polemical works of the system has been misrepresented by adversaries as a tacit acquisence in the weakness of the Dvaita position or the unsoundness of its attempted defences. The *Bhedavidyavilasa* goes out into the world to dispel such falsities.

## II

The work is divided into four Paricchedas[1] (parts) designated प्रत्यक्ष, अनुमान, श्रुति and भेदस्वरूप devoted respectively to the defence of the dualistic metaphysics from the standpoint of the authority of the only three Pramanas or sources of philosophic knowledge accepted in the system. The last chapter is an examination and defence of the Concept of Difference against the intricate dialectics found in the closing part of the *Bhedadhikkara* from pages 79 to 118.

*Page 1 Verse 1,* Opening verse (Mangalacarana). Note that Sri Nrsimha Murti was the Istadevata of Vijayindra also as of Sri Madhva. Advaitis writers like Citsukha and Nrasimhasrama were also devotees of Nrsimha.

Page 1—2, verses 4, 6-7 are found also in other works of Vijayindra like the मध्वाध्वकण्टकोद्धार. *Verse 8*—The reading should be तन्यते in the passive.

*Page 2*—The work opens with the declaration that the reality of difference between Jiva and Paramesvara, established by the universal perceptive judgment of all human beings, *viz.,* "I am not God" नाहमीश्वर: is absolutely *valid* and could not be set aside by any kind of subsequent or future stultification (बाध).

The Advaitin immediately joins issues that this so-called universal conviction cannot be treated as a direct experience or visual perception (the first of the pramanas recognised by the Dvaitin) in as much as the Self (of man) is essentially beyond sense-awareness (ऐन्द्रियक प्रत्यक्ष). There is of course, the Mind which is also regarded (by the Dvaitin and some others) as a sense organ. But the objector (Advaitin) says that mental perception cannot be admitted as the sole proof (प्रमाण) in regard to an *external*

---

[1] No division into chapters is made in the *Bhedadhikkara* but the arguments are found in the same order.

*reality* like the difference of Jiva from Iswara. The sphere of the mind is strictly limited to internal perceptions like those of pleasure and pain.

Further मानसप्रत्यक्ष cannot be admitted as an independent and immediate means of proof of anything as the Mind is only an auxiliary factor of Experience (प्रमाणांतर सहकारि) like light aiding the visual perception of objects. It is therefore concluded that the alleged perception of Difference between Jiva and Iswara by the mind, is an illusion.

The Siddhantin replies that there is no real difficulty in regarding the Mind as competent to reveal Difference between God and the Soul, exclusively. It is seen to be the only means of proving the experiences of pleasure and pain for which we have no other warrant. Why could it not then be admitted as the sole means of revealing the difference between God and man which as a fact of experience must be capable of being revealed by some प्रमाण ? The Advaitin now objects that God being supersensuous, the perception of difference from such a being would be *impossible* for the mind to achieve. This objection is met (p. 3, line 1) in the following way :—

भेद (Difference) being in essence अन्योन्याभाव (mutual exclusion or mutual nonexistence), it is not necessary to have a perception of the counter-correlate (प्रतियोगी) in order to distinguish a given thing from it. What is required in such cases of अभावप्रत्यक्ष is the perception of the base or locus (अधिकरण) alone; cf. the judgment: स्तम्भः पिशाचो न 'this pillar is not the ghost' the invisibility (अयोग्यत्व) of the प्रतियोगी thus in no way deters the perception of difference. In the present case, we do have अधिकरण प्रत्यक्ष perception of the locus of difference (भेदाधिकरण) from God; for we are ourselves the locus (अधिकरण) and realise in ourselves the yawning difference between us and God,

There is thus no bar to the perception of Difference and the judgment नाहमीश्वरः stands unshakeable.

We may again call to aid a simple व्याप्ति that in cases where the existence of a thing is not borne out by perception (when all the requisite conditions for such a perception are present), its nonexistence may be taken to be proved and directly perceived. This is technically known as argument from non-perception अनुपलब्धि which is admitted by the Advaitin as a separate प्रमाण. It may thus be illustrated—"If the identity of Jiva and Brahman were a fact (like the difference of one self from another) it would have been perceptible. It is not so perceived by any one. Hence, it should be treated as a myth and the opposite of such identity *i.e.*, difference, must be admitted to be perceived. The Advaitin thereupon objects that the so-called difference that is realised in life, is only in the embodied state of the Jiva and not in its pure state of isolation from the body and so it cannot be deemed conclusive evidence of the difference of the human soul from God in its ultimate essence (अनौपाधिकावस्था). The author answers that our experience of the self expressed in such judgments as 'I am not God', has reference *only* to the pristine selfhood of the Jiva ; for the अहंप्रत्यक्ष (ego-consiousness) has for its content, only the pure principle of self (Atman) and not any conditioned aspect thereof—though we may all be in a world of material environment. If our most intimate and intuitive perception of self could not conceive, even in a flash, the pure self underlying our being, there is no need for religion and philosophy at all and no hope for the very best of us in all life.

*P. 3, para 2.*—The argument based on the mind being only an accessory to knowledge and no independent proof, is then taken up for consideration. The Advaitin puts in that a means of proof cannot be an accessory to its own kind. If the visual sense were an accessory to another,

the resulting knowledge would cease to be visual. Vijayindra replies (p. 4, para 2) that the objection is puerile. Like light aiding the eye in visual perception, and like the smoke acting as an accessory factor in the व्याप्तिज्ञान that is the cause (कारणं) of the inference of fire, the mind too can be an accessory to प्रत्यक्ष (perception) and yet be able to establish a thesis. The mind is seen to be an accessory to प्रत्यक्ष in in cases of बाध and सत्प्रतिपक्ष by way of mental realisation of व्याप्ति *i.e.* लिंगपरामर्श. It is quite easy to hold that the Mind is a *means* of proof in one aspect—*i.e. as* an *indriya* (इन्द्रियत्वेन रूपेण) and an accessory in another capacity—*i.e.*, *as* Mind—(मनस्त्वेन रूपेण); just as Light in its aspect of being वह्निव्याप्य (directly pervaded by fire) functions as a means of knowledge (प्रमाणान्तर) and acts as an accessory to perception in its aspect of " lightness " (आलोकत्व).

*P. 4.* The author next foils another attempt of the Advaitin to parry the above thrust, by contending that the mind is not an इन्द्रिय at all [1]. Vijayindra quotes many texts from the *Gita*, *Amara*, etc., to refute this view. He concludes the argument by a brilliant summing up of the various capacities in which the mind produces knowledge : ज्ञानमात्रं प्रति मनस्त्वेन * * * * " (p. 5). The mind *qua* Mind produces knowledge *as such* ; intuitive knowledge by operating *as an* इन्द्रिय ; and experiences of pleasure and pain by operating as a *Mind aided by* other factors. The other objection (p. 4, pare 2) that the Mind cannot be a means of knowledge in view of its being already a locus of knowledge (ज्ञानाश्रय) is answered by pointing out that the Mind, unlike the eye and other accessories can have both

[1] The objection is not found in the *Bhedadhikkara*. But some Advaitins like the Vivaranakara (and following him Dharmaraja in his *Paribhasha*) have held the view that the mind is not an इन्द्रिय. Vijayindra evidently intends to dismiss these.

aspects of ज्ञानाश्रयत्वं and ज्ञानकरणत्वम्. This is only by way of अभ्युपगमन्याय. The Siddhanta position is that the Self (आत्मा) alone is the real आश्रय (locus) of knowledge (cf. I know) and *not* the Mind. Such occasional judgments as "our Minds know (आवयोर्मनो जानाति) is only a figurative usage like लाङ्गलं जीवनम् [the plough is (the means of) life].

*P. 6*. Nrsimhasrama then raises a powerful objection. The mind must first of all come into contact with "Difference" (between God and Soul) before it could reveal its presence. But no plausible or satisfactory kind of contact (सन्निकर्ष) between the mind and difference could be made out. None of the possible kinds of relations recognised by the Logicians, *viz.*, contact (संयोग), inherence (समवाय), or identity (तादात्म्य) would apply here and barring these, there is no other sort of sense-relation (इन्द्रियसन्निकर्ष). It would be too much to say that an इन्द्रिय grasps an object without coming into contact or some kind of relation with it. Nor can the relation be what is technically known as विशेषणता recognised in cases of अभाव [1]. In that case, one should be able to sense the non-existence of objects that are too far away. Nor can relationship of the इन्द्रिय with the locus (अधिकरण) also, be deemed necessary. Otherwise, the non-existence of Sound (शब्दाभाव) would not be directly perceived [2].

*P. 7*. Vijayindra meets the objection to the perceptibility of Difference for want of suitable relation (सम्बन्धानुपपत्ति) between Mind and Difference, by answerlng that the

---

[1] Which may be extended to Difference which is a variety of Negation (अन्योन्याभाव)

[2] Because the locus of Sound—*i.e.* Ether (आकाश) is not visible to the naked eye though that does not prevent the Logician from recognising that शब्दाभाव is perceptually established.

relation in question can very well be इन्द्रियसम्बद्धविशेषणता though not *mere* विशेषणता now, the Jiva being intuitively perceived *is* इन्द्रियसम्बद्ध and difference from God is presented as a qualification (विशेषण) of that Jiva and the Mind comes into contact with such difference through contact into the Jiva. It is not necessary that there should be direct relationship of the *indriya* with difference. This would not entail शब्दाभाव becoming imperceptible to the eye in view of आकाश which is the अधिकरण of Sabda not being visible to the eye. Vijayindra says that in such cases like शब्दाभावप्रत्यक्ष the contact may be इन्द्रियाविशेषणता itself. It is no valid objection to this that if different kinds of relations are to be recognised to suit the exigencies in different forms of अभाव प्रत्यक्ष, there would be no uniformity (अनुगम) of relationship. Vijayindra rules out this objection as silly. Such want of uniformity is recognised by the Logicians in cases of समवाय संयोग, etc. Or, proximity (प्रत्यासत्ति) *as such* or sense-relationship (इन्द्रियप्रत्यासत्ति) *as such* may be treated as the one uniform in all there cases.

*Page 7, para 2, lines 8 seq.* The next objection is that the Atman being partless (निरवयव) cannot undergo contact (संयोग) with the mind (in order that his difference from otherselves or God could be realised). The relation of संयोग is recognised by Naiyayikas to be अव्याप्यवृत्ति—co-existent in the same locus with its own non existence (स्वसमानाधिकरणात्यन्ताभावप्रतियोगी). This would be incompatible with the nature of a partless thing. Vijayindra replies that there is no incompatibility in assuming contact of the Atman and the Mind even though the former may be partless. The contact can well be in and through a kind of selflimitation (स्वावच्छेदन) instead of through essential distinction of parts. It is no use to argue that since an

unrelated entity cannot be considered to act as a limiting factor, only a related entity could do to. And as the only relation in distinction would have to be again co-existent with its own nonexistence, such an entity would save to be parts endowed with (सावयव). Vijayindra replies that the limitation (अवच्छेदकत्व) need not be defined as अव्याप्यवृत्ति in which case above the locus would have to admit of parts but as a special kind of स्वरूपसम्बन्ध (internal relation) through which the Atman could establish contact with the Mind and realise difference between himself and God.

*Page 9, line 13 seq.* Vijayindra adduces another reason to regard the mind as a valid means of proof and thereby to establish the validity of the mental perception of Difference. The Mind is a valid instrument of Recollection (स्मृति) ; because its content remains unstultified and validity is nothing more than unstultified reality (यथार्थ्य). The same mind can therefore perfectly well produce a valid perception of Difference. Vijayindra in this connection, establishes the status of Smrti as a piece of valid knowledge even though it may not be of the nature of direct experience (अनुभव). He puts the Siddhantin's attitude to Smrti in fine form : (p. 9, lines 16-18). Smrti *qua* knowledge is the result of some प्रमाण (proof). Other familiar means of proof like verbal testimony and Inference being limited to cases of direct experiences and Smrti being known to be produced even in the absence of such direct experiences, *at the time*, it must necessarily be ascribed to the mind-consistent with the experience—" I remember with my mind " (मनसा स्मरामि).

*Page 10.* Reverting to the Siddhantin's argument on p. 3, lines 2-3, that जिवेश्वरभेद could be established on the basis of senseperception aided by योग्यानुपलब्धि (non-perception of that which is fit to the perceived) Vijayindra reviews certain criticisms of the Advaitin

against the concept of योग्यानुपलब्धि as applied to the present thesis. Nrsimhasrama criticises all possible definitions of the term योग्यानुपलब्धि. Is it (1) योग्यानुपलब्धिः? In that case, the difference of Iswara from Jiva would not be perceptible as God is beyond the pale of perception (अयोग्य). Or is it to be defined as (2) यत्रायत्सत्वमुपलब्धिविरोधि * * * * or (3) प्रतियोगितद्व्याप्येतरयावदुपलम्भसमवधानकालिनानुपलब्धिः?—(non-perception of a thing at the time of the presence of all factors necessary for the perception of its countercorrelate and all those directly pervaded by it) Vijayindra admits (p. 11) the last definition and applies it to the issue in question.

*P. 15.* The Advaitins' plea that the प्रत्यक्ष नाहमीश्वरः relied on by Theists—has reference only to the अहङ्कारावछिन्न and *not* to the शुद्धचैतन्य aspect of the self and that therefore the differential perception नाहमीश्वरः ought to have reference only to such a conditioned self which is दृश्य and therefore मिथ्या (unreal), is minutely examined and refuted. Vijayindra remarks that if the जीवचैतन्य and the unconditioned ब्रह्मचैतन्य were *not different* and if absolute identity of the unconditioned ब्रह्मचैतन्य were present in the जीवचैतन्य (like its identity with its own self (जीवचैतन्ये तदभेदवत्), then the said identity being the same as the जीवचैतन्य itself, should be capable of being perceived without the accessory help of श्रवण मनन and आचार्योपदेश which are recognised as conditions preceded to ब्रह्मापरोक्ष Secondly, if the Jiva and Brahman were actually one, all the attributes of Brahman like omniscience and all rulership would apply to the Jiva as well, much the same as other recognised attributes of the Jiva like जीवत्व and conversely; the attributes of Jiva like जीवत्व would apply to

ईश्वर in which case, even the mind would be an attribute of ईश्वर and the Jiva would, like God himself, have to be accepted as omniscient, etc. In as much the Jiva's identity with God is real. he would like Iswara, have to be accepted as omniscient and just as God is always aware of his identity with himself, the Jiva too should be aware of his identity with Iswara, here and now—(which he is not). Thirdly, if absolute identity were a fact, the Advaitin cannot with any show of reason attempt or justify a impartite classification of चैतन्य into जीव, ईश and विशुद्धाचित्.

So then, भेदज्ञान being a variety of अभावज्ञान can well be born of प्रत्यक्ष and the Siddhanti is justified in looking upon it as a साक्षिप्रत्यक्ष.

*P. 18.* Vijayindra next takes up the objection that the Jiva being a limited centre (परिच्छिन्न) as when he comprehends himself to be limited in pervasion (cf. I am here in the house and not outside (अहमिहैवास्मि सदने) and as limitation implies conditioned existence, the difference perceived in such a conditioned state should also be conditioned. He replies that the limited nature of the self is by no means "conditioned" (औपाधिक) but is natural to it. The contention that if the Jiva were medium—sized he would be unpermanent and if atomic he would be incapable of experiencing the sensations of pleasure, etc., all over the body, the said limitation of the Jiva must be acknowledged to be "conditioned", is not all sound. The experiences of pleasure and pain all over the body without overlapping of any kind, is accountable by contact of the self in and through the Mind (अन्तःकरण) which has parts and could expand and contract according to external stimulii and even such extended and external experience (सर्वाङ्गीणसुखादि) in their the body, does not warrant the assumption of an unlimited self. The texts which declare the Jiva to be ubiquitous (सर्वगत) do not mean to deny

अणुत्व (atomicity) to it as the form सर्वगत (Gita ) might seem to suggest. As the souls are found to permeate the whole universe and every point of space,[1] the said text may be understood in terms of their wide distribution through space.

*P. 19, line 17.* Vijayindra next reviews the Advaitic objection based on a surface interpretation of text like

[2] यथा ह्ययं ज्योतिरात्मा विवस्वान् . . . . . . . . |
उपाधिना क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ||
एक एव तु भूतात्मा . . . . . . . . . .

that all difference between Jiva and Iswara is conditioned and not absolute. Vijayindra opines that such text as the above oppose only the inner differentiation of the personality of Brahman (स्वगतभेद) within itself into many forms, Avatars and Vyuhas, and has no relevance to the question of the nature of the relation between the Jiva and Brahman. That is why we find therein terms like देवात्मशक्ति ; भूतात्मा, देवः, etc., specially significative of the supreme.

He goes on to establish (p. 21, lines 10-11), that the other text

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः |
कार्यकारणताभिन्नः पूर्णबोधोऽवशिष्यते ||

cited by Advaitins[3], could not at all be construed to say that all difference between Jiva and Brahman is औपाधिक

---

[1] cf. परमाणुप्रदेशेषु ह्यनन्ताः प्राणिराशयः |
(Text quoted by Madhva in V. T. Nirnaya).

[2] An अप्रसिद्धश्रुति cited by Sankara in his Brahmasutra-bhashya (III—2, 18).

[3] This and the abovs text have not been quoted or discussed in the *Bhedadhikkara*. Vijayindra's work thus covers some other Advaitic tracts. The text कार्योपाधिरयं जीवः is quoted in the *Samksepa sariraka*.

and brought about by adventitious factors like अन्तःकरण which. is called a कार्योपाधि in that it is a product of Avidya— (अविद्या कार्यरूपं अन्तःकरणं उपाधिर्यस्य सः). Vijayindra points out serious difficulties in the way of such a facile interpretation. Now the selfhood of the Jiva is admittedly beginningless in time :— cf.

जीवईशो विशुद्धाचित् . . . . . ।

. . . . . . . . षडस्माकमनादयः ॥

and it cannot therefore be described (as it is here designated) as a product of अन्तःकरण which has a beginning in time. If अन्तःकरण is supposed to have two, bases a subtle and a gross and the former is held to be eternal, the phrase कार्योपाधि would still be inappropriate; for the subtle अन्तःकरण would not be a product at all. The real meaning of the text should therefore be that 'the Jiva is moved by Considerations (उपाधि) of the fruit of his actions'.—कार्यं कृतिसाध्यं फलं । तन्निमित्तीकृत्य प्रवर्तत इति कार्योपाधिर्जीवः । The Lord is कारणोपाधि in that He is moved by considerations of the merit and demerit of the acts committed by the Jivas जीवकर्मफलव्यवस्थापने कारणं पुण्यपापादि । तदुपाधीकृत्य प्रवर्तमानः । The second half suggests the reason for such an ascendancy of God. It is because He is in Himself above the influence of

कर्मफलं and पुण्यपाप *i.e.*, कार्यकारणताभिन्नः । This idea has the support of Sruti texts like—

न कर्मणा वर्धते नो कनीयान्
न मां कर्माणि लिम्पन्ति ॥ (गीता)

Vijayindra concludes that the (new) sense of उपाधि suggested by him — viz उद्देश्य or प्रयोजन (purpose or object in view) is current in established usages like अध्ययनोपाधिना काश्यां वसति चैत्रः । "X lives in Benares with a view to Studying."

The other text — जीवेशावाभासेन करोति [1]— Simply means that the Sastra correctly reveals (आ सम्यक् भासः ज्ञानं करोति) the true nature of both the Jiva and Isvara to Seekers. The verb करोति on account of its juxtaposition with the word आभास which means 'Knowledge' has to be taken in the sense of "makes known" (ज्ञापयति) just as in the well known verse of Kalidasa :—

पपौ निमेषालसपक्ष्मपङ्क्तिरूपोजिताभ्यामिव लोचनाभ्याम् ।

(*Raghu II, 19*)

the root form पिबति which means drinking (lit. to drink) is seen to convey the sense of "seeing" on account of juxtaposition with the word लोचन (eye).

P. 22. Vijayindra goes on to expose the doctrine of औपाधिकभेद । What does the phrase औपाधिक signify ? Does it mean (1) produced by उपाधयः ? or (2) indicated by them ; or (3) dependent on them for its existence ? or else (4) Subject to dissolution on the destruction of उपाधयः ?

---

[1] Quoted in the *Vivaraaa*.

The Advaitin does *not concede* the first alternative.[1] There is no point in holding two insentients to be dependent on each other; hence the third alternative is unsound. The fourth is supported by evidence. The second alone remains. But it does not necessarily make for the unreality of Difference indicated by उपाधयः । The true function of an adjunct or *upadhi* is to render explicit what is implicit and not to *create* anything *new*. This will be made clear towards the close of the अनुमानपरिच्छेद ॥

P. 23. Vijayindra here notices two verses — one from the *Vishnupurana* (quoted in the commentary on the *Bhedadhikkara*) and another from the *Pancharatra* cited by Vachaspati Misra in his *Bhamati* and appropriated by Advaitins to their cause:

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यति ॥

Vijayindra—following the *Nyayasudha*— reexplains these texts theistically: 'When the ignorance that causes the false notion of identity[2] of Jiva and Brahman is completely

---

[1] This is noteworthy. In the Advaita system also (as in Madhvas'), जीवभाव is अनादि uncreated in time though (dependent) अधीन on Avidya. But it is *not* on that account *created* by Avidya. Prof. H. N. Raghavendrachar unfortunately mistranslates the term *adhina* in the quotation of the Advaita position, he gives from *Nyayasutra*. Note that the text of the *Nyayasutra* advisedly uses the term *adhina* "dependent" i. e., निरूप्यत्वं instead of 'created' जन्यत्वं ।

[Vide p. 10 of Prof. H.N.R's paper on 'Madhva's conception of Svatantra—*Mys. Uni. Journal*, IV. pt 1. A. 1943.]

[2] विभेद is here rendered as the opposite of भेद । भेदविरुद्धः अभेदः । the prefix वि conveys opposition as in— वि-प्रिय—प्रिय ।

